**दिवस्तदर्थस्य, विभाषोपसर्गे [ २ । ३ । ५८, ५९ ] ॥**

प्राप्तेऽप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । प्राप्ते । 'तदर्थस्ये'ति हि वर्तते ।

**उभयत्र च ॥ २२ ॥**

इत उत्तरं या विभाषा अनुक्रमिष्यामः उभयत्र ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति । प्राप्ते, अप्राप्ते, उभयत्र वेति ।

**हृक्रोरन्यतरस्याम् [ १ । ४ । ५३ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' [ १ । ४ । ५२ ] इति वा नित्ये प्राप्तेऽन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्—अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः । अप्राप्ते—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन ।

**न यदि, विभाषा साकाङ्क्षे [ ३ । १ । ११३, ११४ ] ॥**

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'यदी'ति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्—अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः । यत्कश्मीरेष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते—अभिजानासि देवदत्त कश्मीरान् गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं[1] भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ।

---

**प्र०—गतिबुद्धीति** । तत्र विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः । करोति कश्चिदकर्मकः । यथा—विकुर्वते सैन्धवा' इति ।

**यदीति वेति** । प्रतिषेधे प्राप्ते इत्यर्थः । लृट् तु यदि प्रतिषिद्धः ।

---

उ०—भाष्ये—**गतिबुद्धीति नित्ये प्राप्ते इति** । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः । **तत्र विपूर्व इति** । 'विहरति ग्राम'मित्यादौ गच्छतीत्यर्थोऽवगमादिति भावः । भाष्ये—**अप्राप्ते हरति भारमिति** । ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाऽभावस्य 'न गतौ'ति सूत्रे वक्ष्यमाणत्वात् ।

---

१—'तत्रौदनान्' इति पाठान्तरम् ।

विभाषा श्वेः [ ६ । १ । ३० ] ॥

प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? कितीति† वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्–शुशुवतुः शुशुवुः, शिश्वयतुः शिश्वियुः । अप्राप्ते—शुशाव शुशविथ, शिश्वाय शिश्वयिथ ।

विभाषा संघुषास्वनाम् [ ७ । २ । २८ ] ॥

संपूर्वाद्घुषेः—प्राप्ते ऽप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'घुषिरविशब्दने [ ७ । २ । २३ ] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्रवेति । उभयत्र । प्राप्ते तावत्—संघुष्टा रज्जुः, संघुषिता रज्जुः । अप्राप्ते—संघुष्टं वाक्यमाह, संघुषितं वाक्यमाह‡ ।

आङ्पूर्वात्स्वनेः—प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः । कथं च प्राप्ते, कथं वाऽप्राप्ते, कथं वोभयत्र ? 'मनसी'ति+ वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति । उभयत्र । प्राप्ते तावत्–आस्वान्तं मनः, आस्वनितं मनः । अप्राप्ते–आस्वान्तो देवदत्तः, आस्वनितो देवदत्त इति ॥ ४४ ॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

प्र०—दैवयज्ञीत्यादि न विचारितं, तस्माद्दिङ्मात्रप्रदर्शनार्थं कृतम् ॥ ४४ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे प्रथमाध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

उ०—दैवयज्ञीत्यादिति । 'अनार्षयो'रित्यनुवृत्त्यादिनाऽत्रापि सन्देहसंभव इति भावः । आदिना 'विभाषा पुरुषे' इति ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्योते प्रथमस्याध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

† ६ । १ । १५ ‡ 'आहे'ति क्वचित् । + ७ । २ । १८

# अथ सप्तममाह्निकम्

## इग्यणः संप्रसारणम् ॥ १ । १ । ४५ ॥

किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते—'इग्यण इत्येतद्वाक्यं संप्रसारणसंज्ञं भवती'ति, आहोस्विद्वर्णस्य—'इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवती'ति ? कश्चात्र विशेषः ?

**संप्रसारणसंज्ञायां वाक्यसंज्ञा चेद्वर्णविधिः ॥ १ ॥**

**संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यति,—'संप्रसारणात्परः पूर्वो भवती'ति†, 'संप्रसारणस्य दीर्घो भवती'ति‡ । नहि वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपद्यते । नाप्येतयोः कार्ययोः संभवोऽस्ति ।**

---

**प्र०—इग्यणः संप्रसारणम्** । पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयो. संज्ञित्वस्यैकस्मिन्वाक्येऽनुत्पादादेकतरपक्षाश्रयणे सर्वकार्याऽसिद्धिप्रसङ्गात् प्रश्न —**किमियमिति** । वाक्यशब्देन वाक्यार्थ उच्यते । 'इग्यण' इत्यत्र 'भवती'त्यध्याहारादिग्यणो भवतीति योऽय वाक्यार्थस्तस्येयं संज्ञेत्यर्थः । अथवा वाक्यस्यैवेयं संज्ञा, तत्प्रतिपादितं च वाक्य स्वार्थमपि प्रतिपादयति । 'यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञो भवती'ति वर्णसंज्ञापक्षः ।

**वर्णविधिरिति** । वर्णाश्रयो विधिर्दीर्घादिः । **नहीति** । वाक्यार्थेन पौर्वापर्याऽभावात्तस्य चाऽसत्त्वभूतस्य स्थानित्वाऽसंभवादित्यर्थः ।

---

**उ०—इग्यणः** । **लिङ्गेति** । प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञायामन्यविभक्तिनिर्देशश्च वर्णसंज्ञाया लिङ्गमिति भावः । ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह-**युगपच्चेति** । अनेकस्याऽर्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः । ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह—**वाक्यार्थ इति** । पूर्वसूत्रादितीत्यनुवर्त्य 'इग्यण इति संप्रसारणसंज्ञ'मित्यर्थादिति भावः । 'स्वं रूप'मित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेति समभिव्याहारं विनाऽर्थपरत्वाऽसंभवादिति बोध्यम् । ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह—**भवतीति** । एवं चेग्भवनं वाक्यार्थ इति भावः । **तत्प्रतिपादितमिति** । संज्ञयोपस्थितस्याऽनर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । नच्चैतदुभयमप्यत्रेति भावः । **प्रतिपादयतीति** । 'ष्यङः संप्रसारण'मित्यादौ । उच्चारितस्यैव प्रत्यायकत्वमित्यणुदिदितिसूत्रस्थभाष्यविरुद्धमिदम् ।

'वर्णविधि'रित्यस्य वर्णविषयविधानमित्यर्थेऽसिद्धेरभावादाह—**वर्णाश्रय इति** । सम्बन्धसामान्यषष्ठ्या समासः । 'विधि'रिति कर्मणि किरिति भावः । **आदिना**—एकादेशः । **वाक्यार्थेनेति** । क्रियारूपेणेत्यर्थः । **नाप्येतयोरिति** भाष्यं व्याचष्टे—**तस्य चेति** । चोऽसंभवादित्युत्तरं योज्यः । भाष्ये—**एतयोः कार्ययोरिति** । पूर्वरूपदीर्घयोरित्यर्थः ।

---

† ६ । १ । १०८ ‡ ६ । ३ । १३९

अस्तु तर्हि वर्णस्य ।

**वर्णसंज्ञा चेन्निर्वृत्तिः ॥ २ ॥**

वर्णसंज्ञा चेन्निर्वृत्तिर्न सिध्यति—'ष्यङः सम्प्रसारणम्' [ ६ । १ । १३ ] इति । स एव हि तावदिग्दुर्लभो यस्य संज्ञा क्रियते । अथापि कथंचिल्लभ्येत, केनाऽसौ यणः स्थाने स्यात् ? अनेन ह्यसौ व्यवस्थाप्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।

**विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ॥ ३ ॥**

यदयं विभक्तिविशेषैर्निर्देशं करोति 'संप्रसारणात्परः पूर्वो भवती'ति, संप्रसारणस्य दीर्घो भवती'ति, 'ष्यङः संप्रसारणंभवती'ति, तेन ज्ञायते—'उभयोः संज्ञा भवती'ति । यत्तावदाह—'संप्रसारणात्परः पूर्वो भवती'ति,'संप्रसारणस्य दीर्घो भवती'ति, तेन ज्ञायते—'वर्णस्य भवती'ति । यदप्याह—'ष्यङः संप्रसारण'मिति, तेन ज्ञायते—'वाक्यस्याऽपि संज्ञा भवती'ति ।

अथवा पुनरस्तु वाक्यस्यैव । ननु चोक्तं—'संप्रसारणसंज्ञायां वाक्यसंज्ञा चेद्वर्णविधि'रिति । नैष दोषः । यथा काकाज्जातः काकः, श्येनाज्जातः श्येनः, एवं संप्रसार-

---

**प्र०—दुर्लभ इति** । कार्यपक्षे न लभ्यते, नित्यपक्षे तु लभ्यत इति दुर्लभत्वमुक्तम् । **केनासाविति** । लोके इगेव नित्यं प्रयोगेऽस्ति, तस्य तु यण् स्थानिकत्वं शास्त्रसमधिगम्यमित्यर्थः । भाविसंज्ञा विज्ञान तु परिहारान्तराभिधानाय न तावदत्रोक्तम् ।

**उभयसंज्ञात्वस्येति** । उभयोः संज्ञा, उभयसंज्ञा तस्या भाव उभयसंज्ञात्वम् । तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनोभयो संज्ञा सिध्यतीति ।

**यथा काकादिति** । ननु काकत्वाभिसंबन्धात्काकः । अन्यत्र चोक्तं—'येनैव हेतुनैकः

---

**उ०**—'स एव तावन्नास्ती'ति वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह-**कार्यपक्ष इति** । अनेन भाष्येणाऽतीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितं चेदं **मञ्जूषायां नामार्थवादे** । **नित्यपक्षे त्विति** । अनेनाऽथापि कथंचिदित्यपि भाष्यं व्याख्यातम् । **शास्त्रेति** । सितमित्यादौ यण्स्थानिकत्वाऽभावेन, शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः । भाष्ये—**केनासाविति** । **केन**—मानेन यणः स्थाने इति ज्ञातः स्यात् । **अनेन**—संप्रसारणसंज्ञाविधायकेन शास्त्रेण, **असौ**—इग् यणः स्थाने स्थाप्यत इत्यर्थः ।

उभयोः संज्ञात्वमित्यर्थोऽसंभवी, एकस्यैव संज्ञात्वादत आह—**उभयोः संज्ञेति** । एकशेषश्च प्रतिपदम् । अनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादत्रावृत्तेः क उपयोग इति चिन्त्यम् ।

भाष्ये—**यथा काकादिति** । अज्ञात एव काकत्वे तज्जातत्वमात्रेण तथा व्यवहारवदत्रापीत्यर्थः । तत्र शङ्कते—**नन्विति** । **अन्यत्र**—'एको गोत्र' इत्यत्र । **यदानुपेति** । न उपजातो जात्यभिव्यञ्जकः संस्थानविशेष

**णाज्जातं संप्रसारणम् । यत्तत्सम्प्रसारणाज्जातं सम्प्रसारणं तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीति ।**

**अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान् । वाक्येषु तावद्वाक्यैकदेशान् प्रविशपिण्डीम्, प्रविश तर्पणमिति । पदेषु पदैकदेशान्—देवदत्तो दत्तः, सत्यभामा भामेति । एवमिहापि संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते । तेन निर्वृत्तस्य विधिं विज्ञास्यामः 'संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्ये'ति ।**

**अथवाऽऽहार्यं 'संप्रसारणात्परः पूर्वो भवती'ति, 'संप्रसारणस्य दीर्घो भवती'ति न च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नो नाप्येतयोः कार्ययोः संभवोऽस्तीति, तत्र वचनाद्भविष्यति ।**

---

प्र०—काकस्तेनैवापरोऽपी'ति । नैष दोषः, यदानुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति, निर्ज्ञातं च तस्य काकाज्जन्म भवति तदैतदुक्तम् । एवमिहापि संप्रसारणाज्जातत्वादुपचाराद्वर्णोऽपि ताच्छब्द्यं लभते इति भावः ।

**प्रविशेति** । प्रवेशनक्रिया, कर्म योग्यमाक्षिपति, तत्र पिण्ड्यां प्रवेशाऽसंभवाद्गृहप्रतिपत्तिः । एवं पिण्डीमिति कर्मयोग्यां क्रियामाक्षिपद्भक्षणक्रियां प्रकरणवशात्प्रत्याययति । एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः । यथा च पदैकदेशप्रयोगस्तथा 'सिद्धे शब्दार्थसबन्धे' इत्यत्र प्रतिपादितम् ।

**अथवेति** । 'यथा ब्राह्मणशतं भोज्यता'मित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते, तथेहापि 'संप्रसारणा'दित्युक्ते वाक्यार्थेन पौर्वापर्याऽभावात्तत्फलस्य वर्णस्य प्रतीतिः ।

---

उ०—आकारविशेषो यस्येत्यर्थः । कथं तर्हि तथा व्यवहार इत्यत आह—**निर्ज्ञातमिति** । एवं च तस्माज्जातत्वेनाऽवगते तच्छब्दप्रयोग उभयत्रापीति, दृष्टान्तत्वोपपत्तिः । अन्ये तु काकाज्जातो यथा काकत्वाभिसंबन्धात्काक एवं संप्रसारणाज्जातोऽपि संप्रसारणत्वारोपात् संप्रसारणमिति भाष्यार्थमाहुः ।

**वाक्येष्विति** । स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः । योग्या क्रिया दर्शनादिरपीत्यत आह—**प्रकरणेति** । तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहणकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः, पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः । पूर्वपरिहारे संप्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः । अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदः । तदाह—**आक्षेप्स्यतीति** । आक्षेपोऽत्र बोधनमेव । भाष्ये—**इत्येतस्य वाक्यस्यार्थे इति** । अत्र 'वाक्य'पदं पदसमुदायपरम् । **इत्येतस्य**—इत्येतदर्थकस्य-संप्रसारणादुत्पन्नो यस्तस्मादित्यस्येति, संप्रसारणस्य यत्कार्यं तस्येति च—वाक्यस्यार्थे इत्यर्थः ।

पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह—**यथा ब्राह्मणेति** । एवं च यथा तत्र सङ्ख्यान्वयः सङ्ख्येयद्वारा, तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः । तदेवाह—**तत्फलस्येति** । यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्याऽयोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः ।

अथवा पुनरस्तु वर्णस्य । ननु चोक्तं 'वर्णसंज्ञा चेन्निर्वृत्ति'रिति । नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितम् । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—'सिद्धं तु नित्यशब्दत्वा'दिति† । नेदं तुल्यमन्यैरितरेतराश्रयैः । नहि तत्र किंचिदुच्यते—'अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्ती'ति । इह पुनरुच्यते-इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति ।

एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते । तद्यथा कश्चित्कंचित्तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वये'ति । स पश्यति 'यदि शाटको न वातव्योऽथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम् । भाविनी खल्वस्य संज्ञाऽभिप्रेता, स मन्ये वातव्यो 'यस्मिन्नुते शाटक इत्येतद्भवती'ति । एवमिहापि स यणः स्थाने भवति यस्याऽभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति ।

अथवा—इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते । यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता । प्रयुञ्जते च पुनर्लोका इष्टम् उप्तमिति । ते मन्यामहे 'अस्य यणः स्थाने इममिकं प्रयुञ्जत' इति । तत्र तस्याऽसाध्वभिमतस्य शास्त्रेण साधुत्वमवस्था-

प्र०—**भाविनीति** । 'ष्यङः संप्रसारण'मितिविधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः ।

'सिद्धं तु नित्यशब्दत्वा'दित्येतत्समर्थनार्थमाह—**अथवेति** । बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः । **असाध्वभिमतस्येति** । प्राक् संप्रसारणशास्त्रादिति भावः । यथासंख्यसंबन्धाददुहितरामितीकारस्य संप्रसारणसंज्ञा न भवति । 'दिव उ'दित्युत्त्वे यणादेशे कृते 'हल'इति

उ०—भाष्ये—**एकत्वेनेति** । साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः । **नेदं तुल्यमिति** । नित्यशब्दवादेऽपि यण् स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः ।

**भाविसञ्ज्ञेति** । संप्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेतिभावः । अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः ।

**युञ्जीति** । तदयं सूत्रार्थः—'यण्प्रयोगे प्राप्ते इक् प्रयुज्यमानः संप्रसारणसंज्ञक' इति । तज्ज्ञानं च यजाद्युपदेशज्ञानमात्रेण 'वचिस्वपी'त्येतज्ज्ञानं विनापि जातमिति नान्योन्याश्रय इत्यर्थः । वचिस्वपी'त्यादेश्चायमर्थः—'एतत्संबन्धियण्प्रयोगे प्राप्ते इक् प्रयुज्यमानः साधुरिती'ति भावः । असाधोः साधुत्व ब्रह्मणाऽप्युपपादयितुमशक्यमत आह—**प्रागिति** । एतदेव च ध्वनयितुमभिमतस्ये'त्युक्तम् । ननु दुहेर्लङि उत्तमपुरुषे लस्येटि तस्य संप्रसारणत्वेऽदुहितरामित्यादौ 'हल' इति दीर्घः स्यादत आह—**यथासंख्ये**ति । एवं हि यथासङ्ख्यार्थं लृकारोपदेशस्यावश्यकत्वे 'लृकारोपदेशः किमर्थं' इति ऋलृक्सूत्रस्थभाष्याऽसङ्गतिरिति चिन्त्यमिदम् । तस्मात् 'संप्रसारणस्ये'त्यादौ तद्भावितपरत्वाश्रयणान्न

† १ । १ । १*

प्यते किति साधुर्भवति, ङिति साधुर्भवतीति‡ ॥ ४५ ॥

## आद्यन्तौ टकितौ ॥ १ । १ । ४६ ॥

समासनिर्देशोऽयं, तत्र न ज्ञायते क आदिः कोऽन्त इति । तद्यथा 'अजाविधनौ देवदत्तयज्ञदत्ता'वित्युक्ते तत्र न ज्ञायते कस्याजाधनं, कस्याऽवय इति । यद्यपि तावल्लोक एष दृष्टान्तो दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति । अस्ति चेह कश्चित्पुरुषारम्भः ? अस्तीत्याह । कः ? संख्यातानुदेशो नाम× ।

कौ पुनष्टकितावाद्यन्तौ भवतः ? आगमावित्याह ।

युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात्, न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामाऽपूर्वः शब्दोपजनः । अथ युक्तं यन्नित्येषु शब्देष्वादेशाःस्युः । बाढं युक्तम् । शब्दान्तरैरिह

प्र०—दीर्घत्वं तपरकरणान्न भवति—द्युभ्यामिति । अक्षद्युवावित्यत्र 'संप्रसारणाच्चे'ति पूर्वैकादेशो न भवत्यचः पश्चात्सन्निधानात्, अथवा वार्णादाङ्गस्य बलीयस्त्वात् ॥ ४५ ॥

आद्यन्तौ । लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति, अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वपक्ष—**समासनिर्देशोऽयमिति** । अभिन्नस्याऽर्थस्य समासेन प्रतिपादनादित्यर्थः । यद्यपि 'देवदत्तस्य यज्ञदत्तस्य चाऽजा अवयश्च धन'मिति वाक्येपि क्रमव्यवस्था नास्ति तथापि समासे सुतरां नास्तीति प्रतिपादयितुं 'समासनिर्देश' इत्युक्तम् । **यद्यपीति** । दर्शनं—दृष्टं, तस्याऽन्तो निश्चयः । यद्यपि लोके एतद्दर्शनमित्यर्थः ।

उ०—दोषः । ध्वनितं चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता । एतेन 'द्युभ्याम्' 'अक्षद्युवा'वित्यपि सिद्धम् । **अचः पश्चादिति** । समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चाऽनङ्गस्थत्वादित्यर्थः । तत्प्रत्याख्यानेऽप्याह—**वार्णेति** । **आङ्गम्**—उवङ् ॥४५॥

**आद्यन्तौ** । **अपित्विति** । एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि यथासङ्ख्यसूत्रमावश्यकमिति भावः । **अभिन्नस्य**—अपृथग्भूतस्य । **सुतरामिति** । यत्र न साहित्यस्य नियमेन प्रतीतिः, पृथगुपस्थितिश्च, तत्रापि चेन्न क्रमव्यवस्था, किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः । तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तन्त्रमिति तात्पर्यम् । **अन्तो निश्चय इति** । दर्शनस्याऽवसानं निश्चये सत्याकाङ्क्षाऽभावाद्भवतीति 'दृष्टान्त'शब्देन निश्चय उच्यते इत्यर्थः । **एतद्दर्शनमिति** । निश्चय इत्यर्थः । एवं च यथासंख्यान्वयाभिप्रायेणेदृशप्रयोगो लोकेऽसाधुरिति भावः । भाष्ये—**अस्तिचेति** प्रश्नः । 'च'पाठस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात् । **कौ पुनरिति** । यौ टकितावाद्यन्तौ तौ किमागमौ उतादेशौ इति प्रश्नः । **आगमावित्याहेति** । आद्यन्तपदसत्त्वादिति भावः ।

**नित्येष्विति** । वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणाऽकार्या आकाशवन्नित्या इति

‡ ६ । १ । १५ × १ । ३ । १०

भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता ।

आदेशास्तर्हीमे भविष्यन्त्यनागमकानां सागमकाः । तत्कथम् ? संज्ञाधिकारोऽयम् । आद्यन्तौ चेह संकीर्त्येते, टकारककारावितावुदाह्रियेते । तत्राद्यन्तयोष्टकारककारावितौ संज्ञे भविष्यतः । तत्र 'आर्द्धधातुकस्येड्वलादेः' [ ७ । २ । ३५ ] इत्युपस्थितमिदं भवति—आदिरिति । तेनेकारादिरादेशो भविष्यति । एतावदिह सूत्रम् 'इट्' इति । कथं पुनरियता सूत्रेणेकारादिरादेशो लभ्यः ? लभ्य इत्याह । कथम् ? बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशोऽयम् । इकार आदिरस्येति । यद्यपि तावदत्रैतच्छक्यते वक्तुमिह तु कथं 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' [ ६ । ४ । ७१ ] इति, यत्राशक्यमुदात्तग्रहणेनाऽकारो विशेषयितुम् । तत्र को दोषः ? अङ्गस्योदात्तत्वं प्रसज्येत । नैष दोषः । त्रिपदोऽयं बहुव्रीहिः । तत्र वाक्य एवोदात्तग्रहणेनाऽकारो विशेष्यते—अकार उदात्त आदिरस्येति । यत्र तर्ह्यनुवृत्त्यैतद्भवति—आडजादीनाम् [ ६ । ४ । ७२ ] इति । वक्ष्यत्येतत्†

---

प्र०—**संज्ञाधिकारोऽयमिति** । यद्येवं संज्ञासंज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तत इति किमिद्ग्रहणेन, टकावित्येवास्तु । नैष दोषः । इत्संज्ञत्वेन देशविशेष उपलक्ष्यते । तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति 'आलजाटचा'वित्याटच्प्रत्यये टकारः संज्ञा न भवति । तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते । स्थानेऽन्तरतमश्चादेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम् । **अङ्गस्योदात्तत्वमिति** । तचाऽलोऽन्त्यस्येत्यन्त्यस्य स्यात् । **त्रिपदोऽयमिति** । विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः । **यत्र तर्हीति** । तत्र ह्युदात्त-

---

उ०—मते इदम् । **तत्र शब्दान्तरादिति** । प्रसक्ता शब्दान्तरबुद्धिं विहायेत्यर्थः ।

'अनागमकाना'मित्यादेर्यद्यपि 'घुसंज्ञा'सूत्रे आशय उक्त एव, तथापि तं विस्मृत्य 'तत्कथ'मिति प्रश्ने एकदेशी साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह—**संज्ञाधिकारोऽयमिति** । तत्र शङ्कते-**यद्येवमिति** । **उपलक्ष्यत इति** । एवंचाऽनयोरित्त्वमेव नेति भावः । **आटजिति** । यद्यपि प्रत्ययविधौ नाऽस्य प्रवृत्तिः-षष्ठीत्यपकर्षणात् । अत एव टा—टिठन्—ऐकागारिकडित्यादौ नास्य प्रवृत्तिः । तथापि टुकः पर्यायेणाद्यन्तता स्यादिति दोष इति बोध्यम् । 'आटश्चे'त्यादिभिस्तु टकारार्थादित्वोपलक्षिताकाराद्यनुवादेन वृद्ध्यादिविधानम् । भाष्ये—**सङ्कीर्त्येते** । प्रथमत उच्चार्येते । **उदाह्रियेते** । पश्चादुच्चार्येते इत्यर्थः । **अन्तरतम इति** । अर्थतः, श्रुतितश्चेति भावः । ननु प्रथमाऽतिक्रमे कारणाऽभावादाद्युदात्तत्वेनेष्टसिद्धिरत आह—**तच्चेति** ।

---

† न माङ्योगे [ ६ । ४ । ७४ ] सूत्रे—

अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥ १ ॥
पररूपं गुणे नाट ओमाङोरुसि तत्समम् ।
छन्दोऽर्थं बहुलं दीर्घमिणस्योरन्तरङ्गतः ॥ २ ॥

'अजादीनामटा सिद्ध'मिति ।

अथवा यत्तावदयं सामान्येन शक्नोत्युपदेष्टुं तत्तावदुपदिशति प्रकृतिम्, ततो वलाद्यार्धधातुकं, ततः पश्चादिकारम् । तेनाऽयं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते । तद्यथा खदिरबर्बुरयोः—'खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ' । ततः पश्चादाह 'कङ्कटवान् खदिर' इति । तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते ।

अथवैतयाऽनुपूर्व्याऽयं शब्दान्तरमुपदिशति प्रकृतिम्, ततो वलाद्यार्धधातुकम्,

प्र०—ग्रहणमेवाऽनुवर्तत इत्यशक्यो बहुव्रीहिराश्रयितुमिति भावः । वक्ष्यत्येतदिति । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः ।

अथवेति । परिभाषापक्षेऽपि न दोष इत्यर्थः । नहि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति, येनाऽनित्यत्वं स्यात् । किं तर्हि, नित्यं पदमनेनोपायेनान्वाख्यायते । खदिरबर्बुरयोरिति निर्धारणे षष्ठी । 'तयोः कङ्कटवान् खदिर'इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते, न तत्र कङ्कटास्तदानीमारोप्यन्ते, प्रतिपादनोपाय एवाऽयमित्यर्थः ।

अथवेति । एतदाह—अस्ति स्त एवीति तत्त्वतो रूपार्थान्वयाऽभावात्कल्पिताभ्यामे-

उ०—भाष्ये—तत्र वाक्ये एवेति । त्रिपदे वाक्यएवेत्यर्थः । एवः—प्रसिद्धौ । एवं च तत्समानार्थकवृत्ताष्यकारविशेषणत्व सुलभमिति भावः । प्रत्याख्यानादिति । यासुड् विधायकं च 'यासुडुदात्तः परस्मैपदेष्वि'ति पाठ्यमिति न दोषः ।

'आडजादीना'मिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इत्यतो 'घु'संज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह भाष्ये—अथवेति । परिभाषापक्षेऽपीति । परिभाषात्वे नागमत्वपक्षेऽपीत्यर्थः । भाष्ये—तेनाय विशेषेणेति । 'ततः पश्चादिकार'मित्यन्तेनेत्यर्थः । शब्दान्तरम् । तव्यादपक्षेया भिन्नं समुदायमितव्यादिरूपमित्यर्थ । प्रतिपद्यते । तव्यबुद्धिनिवर्त्तनेनेत्यर्थः । नित्यं पदमिति । व्याकरणाऽनिष्पाद्यमित्यर्थः । अन्वाख्यायत इति । क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धिविपरिणामद्वारा प्रत्याय्यत इति आदेशस्थल इवाऽत्रापि बुद्धिविपरिणामात्र नित्यत्वहानिः । तदेव दर्शयति—न तत्र कङ्कटा इति । कङ्कटः—सन्नाहः । उपरितनशुष्कत्वचः । भाष्ये—खदिरबर्बुरयोरिति । 'सामान्यमुपदिशती'त्यध्याहृतसामान्यापेक्षया षष्ठी । सामान्यमेव दर्शयति—खदिरबर्बुरौ गौरकाण्डाविति । द्रव्यान्तरं । कङ्कटाद्भिन्नं तदवयवकम् । समुदायमिति । पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः । तत्र यथा 'गौरकाण्डावि'त्यादिना खदिरेऽपि प्रसक्ता बर्बुरबुद्धिं 'कङ्कटवा'नित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते, तथेहापि सामान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायामिड्बोधकविशेषेणागमत्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यते इत्यर्थः । निरूपितं चैतद्घुसंज्ञसूत्रे । अत्र पक्षे वाचकस्यैवाऽनया प्रणाल्या व्युत्पादनम् । उत्तरपक्षे तु कल्पितस्याऽनेन साक्षाद्बोधनम् । तेन च बोधकस्याऽखण्डस्य बोधनमिति भेदः ।

रूपार्थान्वयाऽभावादिति । व्याकरणेन यस्य 'अ'सितिरूपस्याऽर्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाऽभावः, स्त एधीत्यादौ व्यभिचारादित्यर्थः । असत्येति । शास्त्रप्रक्रिया कल्पिता असत्या इत्यर्थः । यद्यपि सत्यगवयो रेखागवयवत्सावयव एव, अत्र कल्पितावयवसदृशावयवानां तत्राऽन्वयात् ।

१—'कण्टकवान्' इति कीलहार्नसम्मतः पाठः ।

ततः पश्चादिकारं, यस्मिंस्तस्यागमबुद्धिर्भवति ।

**टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः ॥ १ ॥**

टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः । प्रत्यय आदिरन्तो वा मा भूदिति । 'चरेष्टः' [ ३ । २ । १६ ] 'आतोऽनुपसर्गे कः' [ ३ । २ । ३ ] इति।

परवचनात्सिद्धम् । परवचनात्प्रत्यय आदिरन्तो वा न भविष्यति‡ ।

**परवचनात्सिद्धमिति चेन्नाऽपवादत्वात् ॥ २ ॥**

परवचनात्सिद्धमिति चेत्तन्न । किं कारणम् ? 'अपवादत्वात्' । अपवादोऽयं योगः । तद्यथा 'मिदचोन्त्यात्परः' [ १ । १ । ४७ ] इत्येष योगः स्थानेयोगत्वस्य+ प्रत्ययपरत्वस्य चाऽपवादः । विषम उपन्यासः । युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वं च बाधते, इह तु पुनरुभयं सावकाशम् । कोऽवकाशः । टित्करणस्याऽवकाशः—'टितः' इति ईकारो यथा स्यात् × । कित्करणस्यावकाशः— 'किती'त्याकारलोपो यथा स्यात्* ।

---

प्र०—वान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्याऽसत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते रेखागवयेनेव सत्यगवयस्य ।

**प्रत्ययप्रतिषेध इति** । प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोतीति भावः ।

**परवचनादिति** । पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते, न प्रत्ययपरत्वमिति भावः ।

**नापवादत्वादिति** । बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः ।

---

उ०—तथापि सत्यं पदमखण्डमेव, एधीत्यादौ शास्त्रकृत्कल्पितावयवसदृशानामनुपलम्भादित्येतत्पक्षनिष्कर्षः । **सत्यस्य पदस्येति** । एवं च रेखागवयवत्कल्पिताऽनित्यपदविषयकं शास्त्रम् । तत्रागमेष्वपि न त्वतिनं च तल्लोके प्रयुज्यमानं, किं तु तत्प्रत्याय्यमेव पदं तथेति भावः । **एतयेत्यादिभाष्यस्यायमर्थः,—एतया—वक्ष्यमाणया**ऽऽनुपूर्व्या, **अयं**—पाणिनिः, **शब्दान्तरं** बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयम्, **उपदिशति**—प्रतिपादयति । तत्रागमबुद्धावपि न शब्दनित्यताहानिरिति ।

ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याऽप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह—**प्रत्ययपरत्वस्यापीति** । **अपिना**—स्थानेयोगत्वस्य ।

भाष्ये—**युक्तं तत्रेति** । नुम्श्नमादीनां मित्त्वमनवकाशम् । **उभयं**—प्रत्ययसंबन्धिटित्त्वं, कित्त्वं च । एवं चागमटित्त्वकित्त्वयोरनवकाशत्वात्प्रत्ययसंबन्धिनश्च सावकाशत्वाद्येन नाऽप्राप्तिन्यायेनेदं स्थानेयोगत्वस्यैवाऽपवाद इति भावः ।

---

‡ ३ । १ । २ + १ । १ । ४९ × ४ । २ । १५

* ६ । ४ । ६४

प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः परः स्या-त्तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत्—टित्करणादयं परो भविष्यति न पुनरादिरिति, कित्करणाच्च परो भविष्यति न पुनरन्त इति ? टितः खल्वप्येष परिहारो यत्र नास्ति संभवो यत्परश्च स्यादादिश्च । कितस्त्वपरिहारः, अस्ति हि संभवो यत्परश्च स्यादन्तश्च । तत्र को दोषः ? 'उपसर्गे घोः किः' [ ३ । ३ । ९२ ] । आध्योः प्रध्योः । 'नोङ्धात्वोः' [ ६ । १ । १७५ ] इति प्रतिषेधः प्रसज्येत । टितश्चाऽप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिर्न पुनः परः । क तर्हि इदानीमिदं स्यात्—'टित ईकारो भवती'ति ? य उभयवान्—'गापोष्टक्' [ ३ । २ । ८ ] इति ।

**सिद्धं तु षष्ठ्यधिकारे वचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? षष्ठ्यधिकारेऽयं योगः कर्तव्यः । 'आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्ये'ति ।

---

प्र०—सर्वापवादत्वाद्याह—**प्रयोजनमिति** । सति परत्वे प्रयोजनमेतत्स्यात् । परत्वमेव त्वलभ्यमित्यर्थः । **टित्करणादिति** । ङीबर्थादित्यर्थः । **कित्करणादिति** । आकारलोपार्थात् । प्रयोजनमभ्युपेत्याह—**टित इति** । **कितस्त्विति** । ननु परत्वाऽवयवत्वयोर्विरोधात्कथमुच्यते—**परश्च स्यादन्तश्चेति** । नैष दोषः, परस्य सतोऽन्तवत्कार्यप्राप्त्यान्तत्वमुच्यते, यथा समासान्तानाम् । **टितश्चापीति** । पूर्वोक्तमेव समर्थयतेऽधिकं वक्तुम् । **गापोष्टगित्यत्र** कित्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽयमवकाशः । ततश्च चरेष्ट इत्ययमादिः स्यात् ।

**षष्ठ्यधिकार इति** । यत्र स्थानषष्ठीप्राप्ता तत्रोपस्थानमस्याः, न तु प्रत्ययपरत्वबाधनाय ।

---

उ०—**सति परत्व इति** । टिदन्तान्ङीब्विधानात्, किति परे आलोपविधानाच्चेति भावः । 'टित्परो भवतीति'वचनाऽभावादाह—**ङीबर्थादिति** । यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात्परश्चेत्यस्य प्रवृत्त्या पर एव भविष्यति, तथापि 'मिदचोन्त्या'दिति साहचर्याद्बाध्यसामान्यचिन्तामेव न्याय्या मन्यते । अभ्युपगम्यापि परश्चेत्यस्य परत्वाधप्रवृत्तिमाह—**टितःखल्वपीति** । **एष परिहारः** । **युक्त** तत्रेत्यादिनोक्तः । टितो यथाकथंचिद्भवेदपीत्यर्थः । तत्राऽसंभवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादिति भावः । **अवयवत्वेति** । अन्तशब्दोऽवयववाचीति भावः । तत्र दोषमाह—**नोङित्यादि** । **पूर्वोक्तम्** । 'कुतो नु खल्वि'त्यादिनोक्तम् । **अधिकम्**—ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् । भाष्ये—**स्यादेव हीति** । बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते । **परत्वादिति** । शब्दपरविप्रतिषेधात् । **आद्यन्ताविति** सूत्रे च किदन्त इत्यस्य परत्वादित्यर्थः । भाष्ये **गापोष्टगित्युपलक्षणं**, नदट्चोरडादीनाम् ।

बाध्यसामान्यचिन्ताभयपक्षेऽपि दोषाऽभावमाह—**सिद्धं त्विति** । **षष्ठ्यधिकारे इति** । तत्राऽनुवर्त्येदं व्याख्येयम् । तत्रत्यषष्ठीपदं वाऽत्राऽपकृष्टव्यमिति भावः । **भाष्येति** । 'एतदुपस्थितेः प्रागिति शेषः । **नन्विति** । प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ।

## आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तद्भावेऽसंप्रत्ययः ॥ ४ ॥

आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे षष्ठ्या अभावे—असंप्रत्ययः स्यात् । आदिरन्तो वा न भविष्यति ।

युक्तं पुनर्यच्छब्दनिमित्तको नामार्थःस्यान्नार्थनिमित्तकेन नाम शब्देन भवितव्यम् ? अर्थनिमित्तक एव शब्दः । तत्कथम् ? आद्यन्तौ षष्ठ्यर्थौ । नचात्र षष्ठीं पश्यामः । ते मन्यामहे–आद्यन्तावेवाऽत्र न स्तः, तयोरभावे षष्ठ्यपि न भवतीति ॥४६॥

---

प्र०—आद्यन्तयोर्वेति । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावादाद्यन्ताऽभावावगतिरित्यर्थः ।

युक्तं पुनरिति । शब्दभावाऽभावाभ्यामर्थभावाऽभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तं, तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य, न तु कारकः, सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः । अर्थनिमित्तक एवेति । अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः । अप्रयोगाच्चानुमीयते—नूनमर्थ एवाऽत्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः । 'चरेष्ट' इत्यत्र 'परश्चे'त्यधिकारात् पञ्चम्येव युक्ता । 'गापोष्टक्' 'व्रीहिशाल्योर्ढ'गित्यादावप्यानन्तर्यसंबन्धे षष्ठी । न त्ववयवावयविसंबन्धे, प्रत्ययपरत्वेन प्रतियोगे संनिहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात् । पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे संभवति, न कार्यकालपक्ष इति नाश्रितः ॥ ४६ ॥

---

उ०—भाष्ये षष्ठीपदासंबन्धेऽपि समाधानमाह—आद्यन्तयोर्वेति । 'अर्थ'शब्दः प्रयोजनवाची । 'षष्ठ्यर्थत्वा'दिति बहुव्रीहिरित्याह षष्ठ्याः प्रयोजकाविति । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः । षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम् । यद्यत्रावयवभूताद्यन्तरूपोऽर्थः स्यात्तदा तस्य निरूपकाऽऽकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थं तद्बोधनाय च षष्ठीप्रयोगः । न च सोऽस्ति । तस्मादाद्यन्ताऽभावाऽवगतिरिति भावः । भाष्ये 'षष्ठ्यभावे'इत्यस्य तदर्थाऽभावे इत्यर्थः ।

षष्ठीरूपशब्दाऽभावात्तदर्थाऽभावस्तदभावाच्चाद्यन्ताऽभाव इत्यर्थं मन्वानस्य शङ्का भाष्ये—युक्तं पुनरिति । 'नार्थे'त्यत्र काकुः । शब्दभावेति । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः, षष्ठ्यभावे तदर्थाऽभावादाद्यन्ताऽभाव इत्युक्तेरिति भावः । कारकत्वे बाधकमाह—सर्वेण रत्नादिशब्देन । सर्वस्य—रत्नादिरूपस्य । भाष्ये समाधत्ते—अर्थनिमित्तक एवेति । तद्व्याचष्टे—अर्थ एवेति । अनुमीयते इति । कार्याऽभावेन कारणाऽभावोऽनुमीयते । यथा नदीपूराऽभावेनोपरिदेशे वृष्ट्यभाव इति भावः । भाष्ये—आद्यन्तौ । तावर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोगप्रयोजकौ इत्यर्थः । एवं कार्याऽभावात्कारणाभावानुमाने कारणाऽभावात्कार्यमपि नेति निगमयति भाष्ये—तयोरभाव इति । ननु प्रत्ययविधावपि क्वचित्षष्ठी दृष्टेत्यत आह—चरेष्ट इत्यादि । नत्विति । एतत्सूत्रोपस्थानेनेति भावः । तत्र हेतुमाह–प्रत्ययेति । आकाङ्क्षेति । देशांश इत्यर्थः । अनर्थित्वात्—एतदाकाङ्क्षाऽभावात् । अत एव 'धातोः' 'प्रातिपदिका'दित्यधिकारानुग्रहो भवति । धात्वादिभ्यः परो गादिभ्योऽनन्तर इत्यर्थात् । न कार्यकालेति । एतत्तत्त्वमिको गुणवृद्धी इत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव, 'परवचनात्सिद्ध'मित्यस्यैव सिद्धान्त्युक्तित्वात् । 'नापवादत्वा'दित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥ ४६ ॥

## मिदचोऽन्त्यात्परः ॥ १ । १ । ४७ ॥

**किमर्थमिदमुच्यते ?**

**मिदचोऽन्त्यात्पर इति स्थानपरप्रत्यययाऽपवादः ॥ १ ॥**

मिदचोऽन्त्यात्पर इत्युच्यते, स्थाने योगत्वस्य प्रत्ययपरत्वस्य चाऽपवादः† । स्थानेयोगत्वस्य तावत्—कुण्डानि वनानि, पयांसि यशांसि‡ । प्रत्ययपरत्वस्य—भिनत्ति छिनत्ति+ ।

भवेदिदं युक्तमुदाहरणं—कुण्डानि वनानि, यत्र नास्ति संभवो यदयमचोऽन्त्यात्परश्च स्यात्स्थाने चेति । इदं त्वयुक्तं—पयांसि यशांसीति । अस्ति हि संभवो यदयमचोऽन्त्यात्परश्च स्यात्स्थाने च । एतदपि युक्तम् । कथम् ? नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति, 'अपवादैरुत्सर्गा बाध्यन्ता'मिति । किं तर्हि ? लौकिकोऽयं दृष्टान्तः । लोके हि सत्यपि संभवे बाधनं भवति । तद्यथा 'दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्याये'ति, सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवेऽचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते ।

**अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् ॥ २ ॥**

अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः । किं प्रयोजनम् ? 'अनुषङ्गसंयोगादिलोपार्थम्' ।

---

प्र०—**मिदचोऽन्त्या** । **किमर्थमिति** । किमनेन व्यावर्त्यत इति प्रश्नः ।

**स्थानेति** । परस्य सतः प्रत्ययस्याऽपवादस्तेन सामर्थ्यादयमर्थः—**प्रत्ययपरत्वस्यापवाद इति** । **कुण्डानीति** । 'नपुंसकस्य झलच' इत्यत्र झलज्भ्यां नपुंसकस्य तदन्तविधिरित्यस्ति स्थानेयोगत्वस्य प्रसङ्गः । मित्त्वात्त्वस्मिन्नुपस्थिते नपुंसकस्याऽङ्गस्येत्यवयवषष्ठी संपद्यते ।

**स्थाने चेति** । ततश्च सकारस्य स्थाने नुम् भवत्वित्यर्थः । **दृष्टान्त इति** । निश्चय इत्यर्थः । तत्र वृद्धव्यवहारादीदृश एव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते, न समुच्चीयते नापि विकल्प्यते ।

---

उ०—**मिदचो** । प्रयोजनप्रश्नेऽपवादत्वाभिधानमसङ्गतमत आह—**किमिति** । किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः ।

उभयाऽपवादत्वे बीजं तु तत्र तत्र मित्त्ववैयर्थ्यरूपं पूर्वसूत्र एवोक्तम् । ननु 'नपुंसकस्ये'ति सूत्रे 'झलच' इति पञ्चमीति क्व स्थानेयोगत्वप्रसङ्गोऽत आह—**नपुंसकस्येति** । पञ्चम्यां हि 'तस्मा'दिति परिभाषोपस्थाने 'पयांसि' 'ज्ञानानी'त्युभयोरप्यसिद्धिरिति षष्ठ्येवेति भावः ।

भाष्ये—**नैवेश्वर इति** । **ईश्वरो**—वेदः । **धर्मसूत्रं** धर्मशास्त्रम् । भाष्ये—'**अपवादै**'रित्यस्या'ऽसंभवे'-इत्यादिः । **क्वचित्तथैव** पाठः । **बाध्यान्तामितिलोट्** ।

**मग्ने**—मस्जेर्जात्पूर्वं नुमि 'अनिदिता'मिति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम् ।

---

† १ । १ । ४६; ३ । १ । २ ‡ ७ । १ । ७२ + ३ । १ । ७८

अनुषङ्गलोपार्थं संयोगादिलोपार्थं च। अनुषङ्गलोपार्थं तावत्—मग्नः मग्नवान्। संयोगादिलोपार्थं—मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम्.×। ..

**भर्जिमच्योंश्च ॥ ३ ॥**

भर्जिमच्योंश्चाऽन्त्यात्पूर्वो मिद्वक्तव्यः। भरुजा मरीचय इति।

स तर्हि वक्तव्यः। न वक्तव्यः। निपातनात्सिद्धम्। किं निपातनम्? 'भरुजा'शब्दोऽङ्गुल्यादिषु पठ्यते। 'मरीचि' शब्दो बाह्वादिषु।

किं पुनरयं पूर्वान्त आहोस्वित्परादिराहोस्विदभक्तः? कथं चाऽऽयं पूर्वान्तः स्यात्कथं वा परादिः कथं वाऽभक्तः? यद्यन्त इति वर्तते, ततः पूर्वान्तः। अथाऽऽदिरिति वर्तते, ततः परादिः। अथोभयं निवृत्तं, ततोऽभक्तः। कश्चात्र विशेषः?

**अभक्ते दीर्घनलोपस्वरणत्वाऽनुस्वारशीभावाः ॥ ४ ॥**

यद्यभक्तो दीर्घत्वं न प्राप्नोति। कुण्डानि वनानि। 'नोपधायाः' [६।४।७] 'सर्वनामस्थाने चाऽसंबुद्धौ' [६।४।८] इति दीर्घत्वं न प्राप्नोति। दीर्घ।

प्र०—**भर्जिमच्योंश्चेति**। भृजी भर्जन इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः। 'मर्च शब्दार्थे' इत्यस्य चौरादिकस्य णिच्यच इरिति इप्रत्यये णिलोपे च चकारात् पूर्वं ईमागमः।

**पूर्वान्त इति**। सङ्घातस्य पूर्वस्य भक्तो न तदेकदेशस्य। **अथादिरिति**। नहि संभवोऽस्ति यदचोन्त्यात्परश्च स्यात्, पूर्वस्य चाऽऽदिरिति सामर्थ्यात्परादित्वं विज्ञायते।

**कुण्डानीति**। नान्तमङ्गं न भवतीति दीर्घत्वाऽप्राप्तिः। ननु 'तदादिवचनं स्यादिनुमर्थ'मित्युक्तम्। एवं तर्हि तत्स्मर्तव्यं भवतीति गौरवापत्तिः।

उ०—अन्त्याचः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि तस्याऽसिद्धत्वान्नस्योपधात्वाऽभावान्नलोपो न स्यादिति भावः। संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः। **मङ्क्तेत्यादि** त्वनुषङ्गलोपाऽभावेऽपि उदाहरणमुक्तम्।

**ऊमीमावौणादिकौ**।

नन्वन्त्यादचः परत्वं, तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह—**सङ्घातेति**। 'अन्त्या'-दित्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात्समुदायावयवसन्निधौ समुदायग्रहस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वाऽसम्भवाच्चेत्याशयः। नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह—**नहीति**। **परादित्वमिति**। वाचनिकमेव वर्णस्य वर्णाऽवयवत्वं 'ङः सी'ति धुडादेरिवेति भावः।

**'अभक्त'**इति वार्तिकस्य 'एते न सिध्यन्ती'ति शेषः। अभक्तत्वेऽपि नान्तत्वमस्त्येवेत्यत आह—**नान्तमङ्गमिति**। दीर्घविधावङ्गाधिकारादिति भावः। **गौरवापत्तिरिति**। प्रतिपत्तिगौरवापत्तिरित्यर्थः।

१—"नकारस्योपधाया अनुषङ्ग इति पूर्वाचार्यैः संज्ञा कृता" (न्यासे ६१ पृष्ठे I)

× ७।१।६०; ६।४।२४; ८।२।२९

नलोप—नलोपश्च न सिध्यति । अग्ने श्री ते वाजिना श्री षधस्थां* । ताता पिण्डानाम्'† । 'न लोपः प्रातिपदिकान्तस्य' [ ८ । २ । ७ ] इति नलोपो न प्राप्नोति । नलोप ।

स्वर—स्वरश्च न सिध्यति । 'सर्वाणि ज्योतींषि' । 'सर्वस्य सुपि' [ ६ । १ । १९१ ] इत्याद्युदात्तत्वं न प्राप्नोति । स्वर ।

णत्व—णत्वं च न सिध्यति । माषवापाणि, व्रीहिवापाणि । पूर्वान्ते 'प्रातिपदिकान्तनकारस्ये'ति सिद्धम्, परादौ विभक्तिनकारस्येति । अभक्ते नुमो ग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव—'प्रातिपदिकान्तनुम्विभक्तिषु च' [ ८ । ४ । ११ ] इति । णत्व ।

अनुस्वार-अनुस्वारश्च न सिध्यति । द्विषंतपः परंतपः+। 'मोऽनुस्वारो हली'त्यनुस्वारो न प्राप्नोति × । मा भूदेवम् । 'नश्चाऽपदान्तस्य झलि' [ ८ । ३ । २४ ] इत्येवं भविष्यति । यस्तर्हि न झलरः—वहंलिहो गौः, अभ्रंलिहो वायुः । अनुस्वार ।

प्र०—सर्वाणीति । नुमा सुपो व्यवधानात् स्वरो न सिध्यति ।

क्रियते न्यास एवेति । उत्तरपदस्य प्रातिपदिकस्याऽन्तस्तत्र नकारो गृह्यते, गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं नुमो ग्रहणं कर्त्तव्यम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति ।

द्विषंतप इति । प्रमङ्गोच्चारितमेतत् । अत्रहि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति मुमो द्वि द्ग्रहणेन ग्रहणमस्ति ।

उ०—श्री ते इति । 'शेश्छन्दसि बहुल'मिति शेर्लोपः । श्रीणि वाजिनानि तानि तानीत्यर्थः ।

नुमेति । व्यञ्जनाऽविद्यमानवद्भावस्तु ह्रस्वप्राप्तौ, स्वरोद्देश्यकविधिप्राप्तौ वा, नाऽन्यत्रेति भावः । 'सुपी'ति न तदन्तसप्तमीत्यभिमानेनेदम् ।

उत्तरपदस्येति । एवं च सर्वपक्षेष्वपीदमावश्यकमिति भावः । 'भग'शब्दादिनो तन्नकारः प्रातिदिकान्तो भवतीति 'भगिनी'त्यत्राऽनुच्यमाने 'उत्तरपदस्ये'त्यस्मिन्' णत्वप्रसङ्गः । 'भगिनी'त्यत्र च ङयन्तमुत्तरपदं न नान्तम् । सूत्रं तु 'माषवापिणा'वित्यादौ चरितार्थमिति भावः । स हीति । नुम्विधावङ्गस्येत्यधिकारादित्यर्थः । एवं च 'माषवापाणी'त्यादिसिद्ध्यर्थं नुम्ग्रहणमिति भावः । समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्गभगिनीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रहिण्वन्नित्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् ।

द्विषन्तपादौ 'द्विषत्परयोस्तापे'रिति खच् । 'खचि ह्रस्वः' । 'अरुर्द्विष'दिति मुम् । प्रसङ्गेति । द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात्तकारस्य संयोगान्तलोपे 'एकदेशविकृत' न्यायेन 'द्विष'मित्यस्य मान्तस्य पदत्वात्सिद्धोऽनुस्वार इत्यर्थः । वस्तुतस्तस्य न्यायस्याद्याप्यज्ञानात्तदनाश्रयेणेदम् । बहिरङ्गाऽसिद्धत्वं त्रिपाद्यां नेति तन्नोक्तम् । वहंलिहे 'वहाभ्रे लिह'इति खश् ।

* ऋ० सं० ३ । २० । २ † ऋ० सं० १ । १६२ । १६ । शेश्छन्दसि बहुलम् ६ । १ । ७० । + ६ । ३ । ६७ × ८ । ३ । २३

शीभाव—शीभावश्च न सिध्यति । त्रपुणी जतुनी तुम्बुरुणी । 'नपुंसकादुत्तरस्यौङः शीभावो भवती'ति* शीभावो न प्राप्नोति । शीभाव ।

एवं तर्हि परादिः करिष्यते ।

**परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः ॥ ५ ॥**

यदि परादिर्गुणः प्रतिषेध्यः—त्रपुणे जतुने तुम्बुरुणे । 'घेर्ङिति' [७।३।१११] इति गुणः प्राप्नोति । गुण ।

वृद्धि—वृद्धिः प्रतिषेध्या—अतिसखीनि ब्राह्मणकुलानि । 'सख्युरसम्बुद्धौ' [ ७ । १ । ९२ ] इति णित्त्वे 'अचो ञ्णिति' [ ७ । २ । ११५ ] इति वृद्धिः प्राप्नोति । वृद्धि ।

औत्व—औत्वं च प्रतिषेध्यम् । त्रपुणि जतुनि तुम्बुरुणि । 'इदुद्भ्यामौदच्च घेः' [ ७ । ३ । ११७—११९ ] इत्यौत्वं प्राप्नोति । औत्व ।

दीर्घ—दीर्घत्वं च न सिध्यति । कुण्डानि वनानि । 'नोपधायाः सर्वनामस्थाने चासंबुद्धा'विति दीर्घत्वं न प्राप्नोति । मा भूदेवम् । 'अतो दीर्घो यञि सुपि च' [ ७ । ३ । १०१; १०२ ] इत्येवं भविष्यति । इह तर्हि—अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि । दीर्घ ।

नलोप—नलोपश्च न सिध्यति । 'अग्ने त्री ते वाजिना त्री षधस्था । ताता पिण्डानाम्' । 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपो न प्राप्नोति । नलोप ।

अनुस्वार—अनुस्वारश्च न सिध्यति । द्विषन्तपः परन्तपः । 'मोऽनुस्वारो हली'-

---

प्र०—त्रपुणी इति । नित्यत्वात्परत्वाच्च नुमि कृते व्यवधानमिति भावः ।

अतिसखीनीति बहुव्रीहिः ।

द्विषन्तप इति । परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात्पदान्त इति सिद्धोऽनुस्वार इत्याहुः । अन्ये तु तद्भक्तत्वात्तकारग्रहणेनाऽस्य ग्रहणं

---

उ०—परादाविति वार्तिके 'शीभावे नकारप्रतिषेधा'इति पाठः । शीभावे इत्यलुगार्षः । एते दोषस्थानानी ति शेषः ।

टजभावाय नपुंसकत्वाय चाह—बहुव्रीहिरिति ।

भाष्ये अग्ने त्री ते इति । ननु परादिपक्षे, नलोपः प्रातिपदिकान्तस्ये'त्यस्याप्राप्तावपि 'शेश्छन्दसिबहुल'-मित्यनेन नलोपः सिद्ध इति चेन्न, 'निर्दिश्यमान'परिभाषयाऽलोऽन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् ।

तद्भक्तत्वात्पदान्त इति । 'यदागमा' इत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति

---

* ७ । १ । १९; ७२

त्यनुस्वारो न प्राप्नोति । मा भूदेवम् । 'नश्चाऽपदान्तस्य झली'त्येवं भविष्यति । यस्तर्हि न झल्परः—वहलिह्रो गौः, अभ्रंलिह्रो वायुः । अनुस्वार ।

शीभावे नकारप्रतिषेधः—शीभावे नकारस्य प्रतिषेधो वक्तव्यः । त्रपुणी जतुनी तुम्बुरुणी । सनुम्कस्य शीभावः प्राप्नोति । नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति । कस्मात् ? नुमा व्यवहितत्वात् ।

एवं तर्हि पूर्वान्तः करिष्यते ।

**पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥ ६ ॥**

यदि पूर्वान्तः क्रियते, नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति । नपुंसकोपसर्जनह्रस्वत्वम्—आराशस्त्रिणी धानाशष्कुलिनी निष्कौशाम्बिनी निर्वाराणसिनी† । द्विगुस्वर—पञ्चारत्निनी दशारत्निनी‡ । नुमि कृतेऽनजन्तत्वादेते विधयो न प्राप्नुवन्ति ।

---

प्र०—भवतु न तु पदान्तत्वम् । नहि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः । **शीभावे नकारप्रतिषेध इति** । शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः । **निर्दिश्यमानस्येति** । यथा 'पादः प'दिति पद्भाव. पाच्छब्दस्यैव भवति, न तदन्तस्य । **यस्तर्हीति** । यो निर्दिश्यते तस्य न प्राप्नोति, श्रुतिसन्निपाति यद्रूपमौ इति, तन्नकारेण भक्तेनाऽपि तत्त्वतो व्यवहितमित्यर्थः ।

**धानाशष्कुलिनी इति** । नित्यत्वात्पूर्वं नुमं मन्यते । तत्र कृतेऽनजन्तत्वाद्ध्रस्वाप्राप्तिः । **निष्कौशाम्बिनी इति** । नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते तदपि नुमि कृते तथैव न प्राप्नोति ।

---

उ०—भावः । **नहि द्वयोरिति** । ननु संयोगान्तलोपे उक्तरीत्याऽस्त्येव मस्य पदान्तत्वमिति चेदुक्तमेवैतत् । **न तदन्तस्येति** । पदान्तस्यानुच्चारणादिति भावः । **श्रुतिसंनिपातीति** । उच्चारितमिति यावत् ।

**धानाशष्कुलिनी इति** । समाहारद्वन्द्वे तद्द्वित्वविवक्षायां द्विवचनम् । तत्र पूर्वं ह्रस्वः । ततो नुमि नास्ति दोष इत्यत आह—**नित्यत्वादिति** । इदं च पदस्य विभज्याऽन्वाख्यानपक्षे बोध्यम् । **अनजन्तत्वादिति** । 'अच' इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः । **परत्वादिति** । यद्यपि कार्यैक्ये यौगपद्याऽसम्भवेन विरोधाऽभावेन 'परत्वा'दित्यसङ्गतम् । तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वेन च भाष्ये न काचिदनुपपत्तिः । अत एव भाष्ये 'नपुंसकोपसर्जनह्रस्वत्व'मिति संश्लिष्टमेवोक्तमिति बोध्यम् । **तथैवेति** । अनजन्तत्वादिति भावः ।

---

† ७ । १ । ७३; १ । २ । १७—४८ ‡ ७ । १ । ७३; ६ । २ । २६

न वा बहिरङ्गलक्षणत्वात् ॥ ७ ॥

न वैष दोषः । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गो नुम्, अन्तरङ्गा एते विधयः । 'असिद्धं बहिरङ्गमन्तरङ्गे' । द्विगुस्वरे भूयान् परिहारः—सङ्घात-भक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति ॥ ४७ ॥

## एच इग्घ्रस्वादेशे ॥ १ । १ । ४८ ॥

किमर्थमिदमुच्यते ?

एच इग्वचनं सवर्णाऽकार निवृत्त्यर्थम् ॥ १ ॥

'एच इग्भवती'त्युच्यते । 'सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थञ्च' । सवर्णनिवृत्त्यर्थं तावत्—एङो ह्रस्वादेशशासनेषु अर्द्ध एकारोऽर्द्ध ओकारो वा मा भूदिति । अकार-निवृत्त्यर्थं च—इमावैचौ समाहारवर्णौ मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः । तयोर्ह्रस्व-शासनेषु कदाचिदवर्णःस्यात् कदाचिदिवर्णोवर्णौ । मा कदाचिदवर्णं भूदित्येवमर्थ-मिदमुच्यते ।

अस्ति प्रयोजनमेतत् । किं तर्हीति ।

---

प्र०—**नवेति** । 'नित्यादप्यन्तरङ्गो बलीया'निति । स्वरह्रस्वौ च विभक्तिनिरपेक्षत्वादन्त-रङ्गौ । तदत्र निर्दोषत्वात्पूर्वन्तिपक्षः स्थितः ॥ ४७ ॥

**एच इक्** । **किमर्थमिति** । विनापि सूत्रेणेष्टसिद्धिरिति प्रश्नः ।

**एङः इति** । एङः प्रश्लिष्टाऽवर्णत्वात्प्रश्लिष्टावर्णाविर्धेकाराद्धौकारौ प्राप्नुतो, न तु विश्लिष्टा-वर्णयोरैचोरिति भावः । **समाहारवर्णाविति** । समाह्रियमाणावयवत्वात् । **मात्राऽवर्णस्येति** । अष्टादशभेदभिन्नस्याऽवर्णस्य मात्राऽवयव इति भेदसद्भावात् षष्ठ्या निर्देशः ।

---

उ०—**अन्तरङ्गो बलीयानिति** । 'असिद्धं बहिरङ्ग'मित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं, पूर्वजातबहिरङ्गाऽसिद्धत्वबोधकं चेति भावः । अत एव भाष्येणाऽविरोधः । 'अकृतव्यूह'परिभाषा तु नास्त्येवेति भावः । 'पञ्चारत्नि'शब्दे समाहारे द्विगुः, प्रमाणे मात्रचो लुग्वा ॥ ४७ ॥

**एच इक्** । **विनापीति** । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः ।

'एच'इति वक्तव्ये' एङ इति अनुचितमत आह—**एङ इति** । **प्रश्लिष्टेति** । पांसूदकवदित्यर्थः । प्रश्लिष्टाऽवर्णत्वादिनाप्यान्तरतम्यं गृह्यत इति भावः । ऐचोस्तदप्राप्तौ हेतुमाह—**नत्विति** । ऐचौ त्वर्द्धौ न स्त एवेति भावः । 'सवर्णाकारनिवृत्त्यर्थ'मित्येतद्विषयभेदेन योज्यत इति बोध्यम् । कर्मधारयसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशस्य वर्णत्वाऽभावादत आह—**समाह्रियमाणावेति** । मध्यमपदलोपी समास इति भावः । **मात्राऽवर्णस्येति** । भाष्यस्य मात्राकालाऽवर्णादिसदृश ऐचोरवयव इति तात्पर्यम् । **मात्रावयव इति** । तत्सदृशश्चैतयोरवयव इत्यर्थः ।

---

१—'वचनं' क्वचिन्न ।

दीर्घप्रसङ्गः । दीर्घास्त्विकः प्राप्नुवन्ति । किं कारणम् ? स्थानेऽन्तरतमो भवतीति+ । ननु च 'ह्रस्वादेश'इत्युच्यते, तेन दीर्घा न भविष्यन्ति । विषयार्थमेतत्स्यात्—'एचो ह्रस्वप्रसङ्गे इग्भवती'ति ।

**दीर्घोऽप्रसङ्गस्तु निवर्तकत्वात् ॥ २ ॥**

दीर्घाणां त्विकामप्रसङ्गः । किं कारणम् ? 'निवर्तकत्वात्' । नाऽनेनेको निवर्त्यन्ते । किं तर्हि ? अनिको निवर्त्यन्ते* । सिद्धा ह्यत्र ह्रस्वा इकश्चाऽनिकश्च । तत्रानेनाऽनिको निवर्त्यन्ते ।

सवर्णनिवृत्त्यर्थेन तावन्नार्थः ।

**सिद्धमेङः सस्थानत्वात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? एङः सस्थानत्वादिकारोकारौ भविष्यतः, अर्द्ध एकारोऽर्द्ध

---

**प्र०—दीर्घास्त्विति** । स्वतन्त्रमिदं निर्वर्तकमिति भावः । भाव्यमानस्यापि सवर्णग्रहणं दृश्यतेऽमूम्यामित्यादाविति दोषोपन्यासः । **ननु चेति** । अयं हि वाक्यार्थः । 'एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व' इति । **विषयार्थमिति** । यत्र ह्रस्वो विधीयते तत्रैवाऽस्योपस्थानं यथा स्यात्, देवदत्तेति प्लुतादिविधावुपस्थानं मा भूत् । अस्मिश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति । ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाऽप्रसङ्गः ।

**निवर्तकत्वादिति** । एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते । यदि तर्ह्येकवाक्यता, एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति । नैष दोषः । पूर्वं ह्रस्वश्रुत्याऽच उपस्थानाद्ध्रस्वत्वं क्रियते । तत्रैचोऽप्यन्तर्भावाद्ध्रस्वे क्रियमाणे 'एच इ' गित्यस्योपस्थानम् ।

**सिद्धमेङ इति** । एकारस्य तालव्यस्य तालव्य इकारः, ओकारस्य चौष्ठ्यस्य ओष्ठ्य

---

**उ०—**नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह—**स्वतन्त्रमिति** । नियमत्वेऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः । **भाव्यमानस्येति** । सम्बन्धसामान्ये षष्ठी । **देवेति** । देवदत्तेत्येतद्विषयक'गुरोरनृत' इत्येतत्प्लुतविधावित्यर्थः । आदिनोदात्तादिस्वरसंग्रहः । नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह—**ह्रस्वस्येति** । अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाऽप्रवृत्तेरिति भावः ।

**एकवाक्यभावेनैच इति** । **एकवाक्यभावो** नाम 'एच इ'गित्यस्य ह्रस्वे शेषभावः । न तु परस्परवियोगाऽभावः । अन्वयस्तु वाक्यभेदेनैवेति । एतदजानानो नोदयति—**यदीति** । उक्ताभिप्रायेणैवोत्तरयति—**पूर्वं ह्रस्वेति** । एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवतीति भावः ।

**एकारस्येति** । यत्तु कण्ठताल्वादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्वान्तरतमादेशप्रयोजकः, किन्तु परावयव एवेति न दोष इति । तन्न । लक्ष्यगतपरत्वमादाय विप्रतिषेधशास्त्राऽप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम् । भाष्ये—**अर्धं एकार ओकारो वा न भविष्यतीति** ।

---

\+ १ । १ । ५० * "नानेन इको निवर्त्यन्ते । किं तर्हि ? अनिको निवर्त्यन्ते" इति पाठान्तरम् ।

ओकारो वा न भविष्यति । ननु चैङः सस्थानतरावर्द्धैकारार्द्धौकारौ । न तौ स्तः । यदि हि तौ स्यातां तावेवाऽयमुपदिशेत् । ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारं चाधीयते—सुजाते एश्वसूनृते । अध्वर्यो ओद्रिभिः सुतम् । शुक्रन्ते एन्यत्, यजतं ते एन्यदिति × । पार्षदकृतिरेषा तत्रभवताम् । नैव लोके नाऽन्यस्मिन्वेदे—अर्ध एकारः, अर्ध ओकारो वास्ति ।

अकारनिवृत्त्यर्थेनाऽपि नार्थः ।

ऐचोश्चोत्तरभूयस्त्वात् ॥ ४ ॥

ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसी मात्रेवर्णोवर्णयोः, अल्पीयस्यवर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा 'ब्राह्मणग्राम आनीयता'-मित्युच्यते । तत्र चाऽवरतः पञ्चकारुकी भवति ॥ ४८ ॥

प्र०—उकारो भविष्यतीत्यर्थः ।

ऐचोश्चेति । ऐकारः कण्ठ्यतालव्यः, औकारः कण्ठ्योष्ठ्यः । न च तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन भाव्यम् । भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक एव हि समुदायो लक्ष्यत इतीदूतावेव भविष्यतः । ब्राह्मणग्राम इति । ब्राह्मणानां वास्तव्यत्वे उदाहरणम् । न तु स्वामित्वे ॥ ४८ ॥

उ०—तयोरसत्त्वादिति भावः । इतरस्तु सस्थानत्वाऽभावादिति हेतुरनेनोक्त इति मत्वा नोदयति—ननुचेति । सस्थानतराविति । कण्ठतालुस्थानमिति पक्षेऽपि स्थानसाम्यसत्त्वमिति बोधयितुं तरनिर्देशः । स्वाशयं प्रकटयति—न तौ स्त इति । तावेवेति । प्रत्याहारसूत्रे इति भावः । एतच्च एओङ्सूत्रे निरूपितम् । पार्षदेति । तत्रभवता या पर्षत्—सभा, तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् ।

भूयस एवेति । भूयोंऽशस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः । ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वाऽसङ्गतेराह—वास्तव्यत्वे इति । वास्तव्यः कर्त्तरि तव्यान्तः । कुलालकर्मारवर्धकिनापितरजकाः पञ्चकारुकी ॥ ४८ ॥

× "सुजाते ए अश्वसूनृते । अध्वर्यो ओ अद्रिभिः सुतम् । शुक्रं ते ए अन्यद्यजतं ते ए अन्यदि"ति कीलहार्नसम्मत पाठः ।

सात्यमुग्रिराणायनीयानामिदमेवोदाहरणं "ऐ औच्" सूत्रव्याख्याने ८१ पृष्ठेऽपि द्रष्टव्यम् । तत्र कैयटव्याख्या "अन्तः पादस्थस्याऽव्यपरस्याऽकारस्याऽर्धमेकारमर्धमोकारं च विदधति" इति । नागेशस्त्वाह—"सुजाते ए अश्वे"ति अकारलेखस्तु प्रामादिकः ।

ऋग्वेदसंहितायां पञ्चममण्डलस्य ७६ तमे सूक्ते दशकृत्वः पठ्यते "सुजाते अश्वसूनृते" इति ।

१—"पञ्चकारुकी—तक्षायस्काररजकनापितचर्मकाराः" इत्यन्नम्भट्टः ।

## षष्ठी स्थानयोगा ॥ १ । १ । ४९ ॥

किमिदम्—स्थानेयोगेति ? स्थाने योगोऽस्याः सेयं स्थानेयोगा । सप्तम्यलोपो निपातनात् । तृतीयाया वैत्वम् । स्थानेन योगोऽस्याः सेयं स्थानेयोगेति ।

किमर्थं पुनरिदमुच्यते ?

**षष्ठ्याः स्थानेयोगवचनं नियमार्थम् ॥ १ ॥**

नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च व्याकरणे या षष्ठी सा स्थानेयोगैव स्या-

---

प्र०—**षष्ठीस्था** । **किमिदमिति** । समासे विभक्तेः श्रवणाऽप्रसङ्गोऽसमासेऽपि युक्तिरिति प्राप्नोति न तु योगेति प्रश्नः । **स्थानेयोगोऽस्या इति** । स्थाननिमित्तसम्बन्धेत्यर्थः । **तृतीयाया वेति** । निपातनादिति योज्यम् । यथा 'देवदत्तस्य यज्ञदत्त' इति पुत्रत्वादिद्वारकः संबन्धोऽवगम्यते, एवमस्तेर्भू रित्यत्राप्यस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते । स्थानमर्थ इति केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अर्थे च शब्दास्तिष्ठन्ति । तेनाऽस्तेरर्थे भूरित्यर्थः । अन्ये त्वाहुः—'भ्रस्जो रोपधयो रमन्यतरस्या'मित्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्ग-वाची स्थानशब्द आश्रीयते । तेनाऽस्तेः प्रसङ्गेऽस्तेः प्राप्तौ भूः प्रयुज्यते इत्यर्थः संपद्यते । स्वाभाविकोऽस्तेरप्रयोगः, आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते ।

**किमर्थमिति** । विनापि सूत्रेणेष्टं सिध्यति, आरब्धे चाऽतिप्रसङ्ग इति प्रश्नः ।

**एकशतमिति** । षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् । **यावन्तो वेति** । शब्दे यावतां सम्भव इत्यर्थः ।

---

उ०—**षष्ठीस्था** । **युक्तिरिति** । पष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः । **निपातनादिति** । तृतीयान्तस्य समासे तृतीयाया लुक्यस्यैत्वमित्यर्थः । तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाऽभावादिनादेशे-ऽन्यस्य स्यात्, लुग्बाधे मानाऽभावाच्च । वृद्धयापत्तेश्च । अत एवेत्वं नोक्तमिति बोध्यम् । अत्र स्थानसामी-प्यादयः षष्ठ्यर्थसम्बन्धनिरूपकाः, न तु षष्ठ्यर्था इति न मतुप् सूत्रस्थभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः, न तु समानाधिकरणबहुव्रीहिः । तद्ध्वनयतोक्तम्—**स्थाननि-मित्तसंबन्धेत्यर्थं इति** । नन्वादेशविधौ स्थानशब्दाऽभावेन कथं स्थाननिमित्तः संबन्धोऽत आह—**यथेति** । तथा च 'देवदत्तस्य यज्ञदत्त' इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा, तथा प्रदेशेषु स्थानपदा-ध्याहारेण, वाक्यैकदेशान्यायेन वा बोध इति भावः । **अर्थे चेति** । वाचकत्वसंबन्धेनेति भावः '**अस्तेः प्रसङ्ग**' इत्यस्य व्याख्या—**अस्तेः प्राप्ताविति** । **प्रयोग इति** । स्वाभाविक इत्यनुषज्यते । शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यत इति भावः । रम्विधौ रोपधघटितस्याऽर्थे न वृत्तिरित्यत्राऽरुचिः ।

**आरब्धे चेति** । तत्राऽतिप्रसङ्गवारणाय व्याख्यानत इत्येतदाश्रयणे तथैव सिद्धौ परिभाषेयं व्यर्थेति भावः ।

दिति, तद्यान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते ।

अस्ति प्रयोजनमेतत् । किं तर्हीति ।

**अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ॥ २ ॥**

अवयवषष्ठ्यादयस्तु न सिध्यन्ति । तत्र को दोषः ? 'शास इदङ्हलोः' [ ६ । ४ । ३४ ] इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । 'ऊदुपधाया गोहः' [ ६ । ४ । ८९ ] इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ।

**अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्याऽसन्दिग्धत्वात् ॥ ३ ॥**

अवयवषष्ठ्यादीनां च नियमस्याऽप्राप्तिः । किं कारणम् ? 'योगस्याऽसंदिग्धत्वात्' । संदेहे नियमो न चावयवषष्ठ्यादिषु संदेहः । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते ? लौकिकोऽयं दृष्टान्तः । तद्यथा लोके—कश्चित् कंचित् पृच्छति ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे—अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति, न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते । एवमिहापि संदेहे नियमो, न चावयवष्ठ्यादिषु संदेहः ।

---

**प्र०—अवयवेति** । नियमेन संबन्धान्तराणां निवर्तनादिति भावः । **उपधामात्रस्य चेति** । शासिना संबन्धाऽभावात् पचादिसम्बन्धिनोऽपीत्यर्थः । तत्र ह्यनिदितामित्यत उपधाया इत्यनुवर्तते ।

**असंदिग्धत्वादिति** । अनियमप्रसङ्गे हि नियमः क्रियते न तु प्रागेवाऽवस्थिते नियमे । **हस्तदक्षिण इति** । हस्तो दक्षिणो यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः ।

---

**उ०—षष्ठीदण्डकपाठो**-ग्रन्थविशेषः । भाष्ये **षष्ठ्यर्था इति** । षष्ठीप्रयोजनकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः । यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम् । 'एकशत'मिति निर्णयेनाऽभिधाय पुनः संदिग्धाभिधानमयुक्तमत आह—**शब्द इति** । 'वा'शब्दो वाक्यालङ्कारे । भाष्ये—**प्राप्नुवन्तीति** । तेषां सर्वेषां बोधः प्राप्नोतीत्यर्थः ।

**नियमेन**—प्रकृतसूत्रेण । **शासिनेति** । तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याऽभावादिति भावः ।

भाष्ये—**अवयवषष्ठ्यादीनामिति** । अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाऽप्राप्तिरिति वार्त्तिकार्थः । **दक्षिणो यस्येति** । दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः । **तिर्यक्पथः** । अनृजुमार्ग इत्यर्थः । पूर्वपश्चिमान्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् ।

अवयवग्रहणात्सिद्धम् । यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति । तद्यथा 'माषा न भोक्तव्या' इत्युक्ते मिश्रा अपि न भुज्यन्ते ।

**अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ॥ ७ ॥**

अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः । होतापोतारौ+ । यथैवोश्चाऽन्यस्य च स्थानेऽण् रपरो भवति, एवं य उः स्थानेऽण् चाऽनण् च सोऽपि रपरः स्यात् ।

यदि पुनर्ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्येत, खट्वर्श्यः मालर्श्यः । नैवं शक्यम् । इह हि दोषः स्यात्—कर्ता हर्ता, किरति गिरति* । ऋवर्णान्तस्येत्यु-

प्र०—अवयवग्रहणादिति । पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते । अवयवावेवचाऽनेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्थान इति भावः ।

रान्तप्रतिषेध इति । आनङि विधीयमाने आकारस्याऽणो भावादित्यर्थः । तस्मादवयवग्रहणादित्यस्याऽतिव्यापकत्वाद्यत्र साक्षादृवर्णस्याऽण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसङ्ख्यानं कर्तव्यमेव ।

यदि पुनरिति । 'उ'रिति वर्णग्रहणाद्वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायादृवर्णान्तस्य ग्रहणम् । 'खट्वर्श्य' इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम् । कर्तेति । 'अङ्गस्ये'ति षष्ठी अन्त्यमलमुपसंहृ नेति ऋवर्णस्य गुणेन भाव्यम् । न च ऋवर्णमृवर्णान्तो भवतीति दोषः । न चेह तदन्तविधिरस्ति, 'उर'णिति भूतानुवादात् । न च प्रदेशेषु

उ०—उद्भूतेति । अतएव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः । न चावयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसंख्यायाः समुदाये आरोपो, नैतावता प्रत्येकं स्थानित्वलाभोऽत आह—अवयवावेव चेति । 'इतरेतरयोग' इति शेषः । एवंच तत्र समुदायस्यावयवाऽभेदेन बोधनाद्द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः । अयमेव चोद्भूतावयवभेदः समुदाय इत्यस्यार्थ इति भावः ।

भाष्येऽगृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह—अवयवग्रहणात्सिद्धमिति चेदिति । रान्तस्येति । रान्तत्वस्येत्यर्थः ।

ऋवर्णान्तेति । शब्दशास्त्रप्रस्तावाच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेर्ऋवर्णान्तस्य गुणेन भाव्यमत आह—अङ्गस्येति । षष्ठीति । 'इगन्ताङ्गान्त्यस्य गुण' इति वाक्यार्थ इति भावः । भाष्ये लक्ष्याऽसिद्धिदोषो ऋवर्णान्तस्येत्यर्थे उक्तः । स्वयं तदर्थाऽसम्भवमप्याह—न चेहेति । भूतानुवादादिति । एवंचाऽनुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः । यद्वा समानविभक्त्यन्तविशेष्यरहिताभूतानुवादादित्यर्थः । यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः । गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधि-

+ ६ । ३ । २५ * ७ । ३ । ८४; ७ । १ । १००

च्यते, न चैतदृवर्णान्तम् । ननु चैतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम् । अर्थवता व्यपदेशिवद्भावो न चैषोऽर्थवान् । तस्मान्नैवं शक्यम् । न चेदेवमुपसंख्यानं कर्तव्यम् । इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातुः पितुरिति† ।

उभयं न वक्तव्यम् । कथम् ? इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति ।

कथं मातुः पितुरिति ? अस्त्वत्र रपरत्वम् । का रूपसिद्धिः ? 'रात्सस्य' [ ८ । २ । २४ ] इति सकारस्य लोपो, रेफस्य विसर्जनीयः‡ । नैवं शक्यम् । इह हि—मातुः करोति पितुः करोतीति, 'अप्रत्ययविसर्जनीयस्ये'ति षत्वं प्रसज्येत+ ।

---

प्र०—तदन्तस्य कार्यम्, अन्त्यस्यैवाऽनुसंहारेण स्थानित्वप्रतिपादनादिति भावः । अर्थवतेति । यथैवेयायेत्यत्रैकाच्त्वम् । अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते । इह चेति । उपसंख्यानस्याऽतिव्याप्त्येत्यर्थः । मातुरिति । रपरत्वे कृते विभक्तिसकारस्य रुत्वम् । पूर्वस्य 'रोरी'तिलोपः । 'ढ्रलोप' इति दीर्घत्वम् । तत्र 'मातू' रिति प्राप्नोतीति भाव ।

द्वयोरिति । अवयवावेवात्राऽपेक्षितपरस्परौ स्थानिनौ । अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम् । अन्यतरत इति—तृतीयान्तादाद्यादित्वात्तसिः । तद्यथेति । एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते, तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेश. । अकङादेस्तु समुदायस्यादेशत्वं नाऽण इति रपरत्वाऽभावः ।

अप्रत्ययेति । 'अ'सित्ययं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति

---

उ०—रिति भावः । न च प्रदेशेष्विति । इह तदन्तविध्यभावेपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्तत्तदनुरोधेनानुवादेपि एकदेशद्वारा ऋवर्णान्तं ग्राह्यं, तदपि नास्तीति भावः । इदं चिन्त्यम् । वृद्धिर्यस्येत्यादावीदूदेद्द्विवचनमित्यादौ चानुवादेऽपि संज्ञाप्रवृत्तेः । सर्वत्रेति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकम् । अतो भाष्योक्त एव दोषः । भाष्ये—अर्थवतेति । इदमसहायत्वोपलक्षणम् । अत एव 'कुरुते' इत्यादावनर्थकेनाऽपि सः । तत्र हि स ह्रिसंज्ञोपयोगिसहायरहित एवेति दिक् । भाष्ये—इहचेति । 'एकादेशस्योपसङ्ख्यान'मित्यौपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः । मातुरित्यादौ तदुपसङ्ख्यानाऽतिव्याप्तेरिति भावः । मातूरितीति । 'ऊ रपर' इति पूर्वोक्तभाष्यप्रयोगविरोधात् 'ऋत उ'दिति तपरत्वान्मातूरित्यादौ न दीर्घ इत्यपास्तं वेदितव्यम् ।

उक्तेऽर्थे गमकमाह—अतएवेति । पञ्चम्यन्तात्तसिल्यर्थासङ्गतेराह—तृतीयान्तादिति । समुदायस्येति । प्रत्येकमादेशत्वे प्रमाणाऽभावादित्यर्थः ।

भाष्ये—रात्सस्येति । सलोपे रुत्वस्याऽसिद्धत्वादिति भावः । असित्ययमिति । प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः । अकारोपीति । सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इति भावः । उत्वे च कृत

---

† ६ । १ । १११; ८ । २ । ६६; ८ । ३ । १४; ६ । ३ । १११ ‡ ८ । ३ । १५
+ ८ । ३ । ४१

'अप्रत्ययविसर्जनीयस्ये'त्युच्यते प्रत्ययविसर्जनीयश्चाऽयम् । लुप्यतेऽत्र प्रत्ययो 'रात्सस्ये'ति । एवं तर्हि 'भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य' ×। यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यो—नैकादेशनिमित्तात् षत्वं भवतीति ?

किं पुनरयं पूर्वान्तः, आहोस्वित्परादिः, आहोस्विदभक्तः ? कथं चाऽयं पूर्वान्तः स्यात्, कथं वा परादिः, कथं वा अभक्तः ? यद्यन्त इति वर्तते* ततः पूर्वान्तः । अथादिरिति वर्तते ततः परादिः । अथोभयं निवृत्तं ततोऽभक्तः । कश्चाऽत्र विशेषः ?

---

प्र०—भावः । **प्रत्ययेति** । प्रत्ययावयवत्वादकारोऽपि प्रत्ययः । अतस्तदादेशोऽपि प्रत्यय इति भावः । **लुप्यत इति** । सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायसन्निवेशिनीत्वात्तस्या इति कुतस्तदादेशस्तां लप्स्यते । उत्वे च कृतेऽवशिष्ट सकार एव प्रत्ययसंज्ञ, स च लुप्त इति भावः । **एकादेशनिमित्तादिति** । एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः ।

**यद्यन्त इति** । यद्यपि रपर इत्यत्रान्यपदार्थस्य प्राधान्यम्, तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवाऽन्तत्वं विशेषणमिति भावः । यद्यपि प्रसज्यमान एवाऽण् रपरो विधीयते, तथाप्यानङ इव साक्षादत्राऽर् आर् इत्येवमविधानात्तात्पर्यपर्यालोचनन्यायेन केवलावस्थानात्पक्षत्रयविमर्शः ।

---

उ०—इति । न चैकादेशस्य परादित्वस्येनोर्सित्यस्य प्रत्ययतया लोपे 'एकदेशविकृत'न्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययाऽवयवत्वमस्त्वेवेति वाच्यम्, त्रिपाद्या असिद्धत्वेन तत्रान्तादिवद्भावाऽप्रवृत्ते । स्थानिवत्त्वेन तु न निर्वाहः । उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाऽभावात् । **सर्वे सर्वपदादेशा** इत्यनेन तु 'मातृ अ'सित्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वाऽभावात् । भाष्ये 'लुप्यतेऽत्र प्रत्ययविसर्जनीय' इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तत्राभिमतो विसर्जनीयः, स लुप्यते न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः । **एवं तर्हि भ्रातुष्पुत्रेति** । त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति । गूढोऽभिसन्धिः । कर्मधारये निमित्तिपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपदे लक्षणां च दर्शयति—**एकादेशशास्त्रमिति** ।

**यद्यपीति** । तथा च तस्यैव विशेषणं स्यादिति भावः । **प्राधान्यादिति** । रपरशब्दतात्पर्यविषयत्वादित्यर्थः । एवं च पूर्वान्तावयवभूतरेफपरोऽणित्यर्थः । सूत्रे 'रपर' इति समासश्च सौत्रत्वात्साधुः । [ रः परो यस्येति बहुव्रीहिः । अवयवत्वमेव षष्ठ्यर्थः । वर्णे वर्णान्तरावयवत्वं तु गौणम् । यथा 'ह्रस्वस्य तु'गित्यादाविति तात्पर्यम् ] ।

नन्वरारादिरूपेण विधानात्कथमभक्तत्वादिशङ्केत्यत आह—**यद्यपीति** । **अविधानादिति** । अनुच्चारणादित्यर्थः । **तात्पर्येति** । प्राप्ताऽप्राप्तविवेकन्यायेनेत्यर्थः । **केवलेति** । रेफमात्रविधौ सूत्रतात्पर्यादिति भावः । यत्तु अयमपि विचारो 'भूतस्याऽणो रपरत्व'मिति पक्षे 'नष्टाश्वरथ'न्यायेन । **अनान्तर्यमेवान्तर्यमिति** ऋकारस्याकारावेव गुणवृद्धी भविष्यतः । अरारादिरूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथाऽत्रापीति तत्त्वमिति । तत्तु प्रकृतसूत्रे तस्य पक्षस्याऽस्थितत्वादयुक्तम् ।

---

× ८ । ३ । ४१ सूत्रे चतुर्थं वार्तिकम् । * १ । १ । ४६

**अभक्तो दीर्घलत्वयगभ्यस्तस्वरह्लादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाऽव्यवस्था च ॥ ८ ॥**

यद्यभक्तो दीर्घत्वं न प्राप्नोति—गीः पूः† । 'रेफवकारान्तस्य धातो'रिति‡ दीर्घत्वं न प्राप्नोति । किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते, न पुनः पदं विशेष्यते—रेफवकारान्तस्य पदस्येति ? नैवं शक्यम् । इहापि प्रसज्येत–अग्निर्वायु-रिति । एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेकं—'रेफवकारान्तस्य पदस्येको धातो'रिति । एवमपि–प्रियं ग्रामणि कुलमस्य प्रियग्रामणिः, प्रियसेनानिः–अत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यते, धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति—गीः पूः । दीर्घ ।

लत्व—लत्वं च न सिध्यति । निजेगिल्यते । 'ग्रो यङि' [ ८ । २ । २० ] इति लत्वं न प्राप्नोति ।

नैष दोषः । 'ग्र' इत्यनन्तरयोगैषा षष्ठी । एवमपि स्वर्जेगिल्यते इत्यत्राऽपि प्राप्नोति । एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः । अथवा 'ग्र' इति पञ्चमी । लत्व ।

यक्स्वर । यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव । पूर्यते स्वयमेव । 'अचः कर्तृयकि' [ ६ । १ । १९५ ] इत्येष स्वरो न प्राप्नोति रेफेण व्यवहितत्वात् ।

नैष दोषः । 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति नास्ति व्यवधानम् । यक्स्वर ।

अभ्यस्तस्वर—अभ्यस्तस्वरश्च न सिध्यति । मा हि स्म ते पिपरुः । मा हि स्म ते बिभरुः+ । 'अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुके'× इत्येष

---

प्र०—लत्वंचेति । 'ग्र' इत्यवयवषष्ठीति चोद्यम् ।

पिपरुरिति । पृ लङ् झि शपः श्लुर्द्विर्वचनम् । अर्तिपिपर्त्योश्चेतीत्त्वम् । 'सिजभ्यस्ते'ति

---

उ०—वार्त्तिके प्रतिषेधः–अभावो निवर्त्तनं च । आद्ये 'स्या'दिति शेषः, द्वितीये 'वक्तव्य'मिति । गृप्रोः क्विपि गीः पूः । ॠत इत्, उदोष्ठ्येतीत्त्वोत्त्वे । भाष्ये—पदमिति । पदस्येत्यनुवर्त्तमानमित्यर्थः ।

अनन्तरयोगेति । अन्तरशब्दोऽव्यवहितवाची ।

स्वरविधाविति । यद्यपि हल्स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम् । अत एवाऽचः कर्तृ—इति सूत्रेऽच इति चरितार्थं, तथापि तदनाश्रयैणैकदेश्युक्तिर्भाष्यमितितत्त्वम् ।

भाष्ये माङ्प्रयोगोऽडभावाय, तस्मिन् हि अट्स्वरः स्यात् । हि प्रयोगो 'हि चे'ति निघातनिषेधाय,

---

† ७ । १ । १००; १०२ ‡ ८ । २ । ७६ + ७ । ३ । ८३ × ६ । १ । १८९

स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात् ।

नैष दोषः । 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति नास्ति व्यवधानम् । अभ्यस्तस्वर ।

हलादिशेष—हलादिशेषश्च न सिध्यति । ववृते ववृधे* । अभ्यासस्येति हलादिशेषो न प्राप्नोति† । हलादिशेष ।

विसर्जनीय [ प्रतिषेध ]—विसर्जनीयस्य च प्रतिषेधो वक्तव्यः । नार्कुटः नार्पत्यः । 'खरवसानयोर्विसर्जनीयः' [ ८ । ३ । १५ ] इतिविसर्जनीयः प्राप्नोति । विसर्जनीय [ प्रतिषेध ] ।

प्रत्ययाऽव्यवस्था च । प्रत्यये च व्यवस्था न प्रकल्पते—किरतः गिरतः । रेफोऽप्यभक्तः प्रत्ययोऽपि, तत्र व्यवस्था न प्रकल्पते ।

---

प्र०—जुस् । 'जुसि चे'ति गुणः ।

**ववृत इति** । अभ्यासावयवस्याऽनादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः ।

**नार्कुट इति** । यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः ।

**किरत इति** । एकवचने किरतीति नित्यत्वात्पूर्वं विकरणः । आङ्गं तु कार्यमनित्यम् । अकृते हि विकरणे गुण प्राप्नोति, कृते त्विरवमिति । द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादिरवम्, तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात् । स हि धातोः परो विधीयते । अथ विकरणात्परो रेफस्तदाऽप्यण् परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते । अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाऽव्यवस्थोक्ता ।

---

उ०—'स्म'शब्दो लक्ष्यसिद्धये ।

**अभ्यासावयवस्येति** । गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं 'तन्मध्यपतित'न्यायेन, नत्वेतावताऽवयवत्वमिति भ्रमितव्यमिति भावः । यद्वा ऋवर्णान्ताभ्यासस्येत्यर्थे पूर्वं तकारस्य हलादिःशेषेण निवृत्ताबुरदत्वम्, ततः पुनर्हलादिः शेषो न स्यात्, अनवयवत्वादिति भावः । नचैवं 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनर्हलादिःशेषाऽनापत्तिरिति वाच्यम्, लक्ष्यभेदात् ।

नृकुटीशब्दाद्भवादावण् । नृपतेर्दित्यदित्येति यः । ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह—**यस्मादिति** । यस्माद्विधिस्तद्वृत्तिनृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन, तदादित्वं च रेफान्तस्य मुख्यम्, सुबन्तत्वं च प्रत्ययलक्षणेनेति भावः ।

एकवचनान्तानुदाहरणे बीजमाह—**एकेति** । **नित्यत्वादिति** । विकरणविधौ 'सार्वधातुके' इति विषयसप्तमी । अन्यथाऽभक्तत्वेऽनन्तरसार्वधातुकाऽभावेन विकरणाऽप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः । **नित्यत्वादिति** । तसो ङित्त्वादित्त्वस्यैव प्रवृत्तेः । **न प्रकल्पत इति** । नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः ।

---

* ७ । ४ । ६६ † ७ । ४ । ६०

एवं तर्हि पूर्वान्तः करिष्यते ।

**पूर्वान्ते वेवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च ॥ ६ ॥**

यदि पूर्वान्तः रोरवधारणं कर्तव्यम्—'रोः सुपि' [ ८ । ३ । १६ ] । रोरेव सुपि नान्यस्य रेफस्य । सर्पिष्षु धनुष्षु । इह माभूत्—गीर्षु पूर्षु ।

परादावपि सत्यवधारणं कर्तव्यं—चतुर्ष्वित्येवमर्थम् । [ वेवधारणम् ] ।

विसर्जनीयप्रतिषेधः । विसर्जनीयस्य च प्रतिषेधो वक्तव्यः । नार्कुटः नार्पत्यः । 'खरवसानयोर्विसर्जनीयः' [ ८ । ३ । १५ ] इति विसर्जनीयः प्राप्नोति ।

परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यो नार्कल्पिरित्येवमर्थम् । कल्पिपदसङ्घातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति कृत्वा विसर्जनीयः प्राप्नोति । [ विसर्जनीयप्रतिषेधः ] ।

यक्स्वरः । यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव, पूर्यते स्वयमेव । 'अचः कर्तृयकि' [ ६ । १ । १९५ ] इत्येष स्वरो न प्राप्नोति ।

नैष दोषः । उपदेश इति वर्तते‡ । [ यक्स्वरः ] ।

---

प्र०—गीर्ष्विति । परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भाव. । अभक्तपक्षेऽपि तदादित्वात्प्राप्नोतीति कर्तव्यं वेवधारणम् ।

कल्पिपदेति । नृकल्पशब्दादिञि वृद्धौ च रेफः प्रत्ययसमुदायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य । ततश्च नृशब्दस्य कल्पशब्दे परत पदसंज्ञा विधीयमाना तदादीत्यधिकाराद्रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः । पदशब्देन च पद्यतेऽनेनार्थ इति प्रत्यय उच्यते । तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्याऽवयव इति तयोः पौर्वापर्यमस्त्येवेत्यवयवस्यात्मन एव पदान्तता विहन्तुं नोत्सहत इत्यर्थः । कचित्तु 'कल्पपद-संघात भक्त' इति पाठः । तत्रायमर्थ.—कल्पशब्दस्य संबन्धि यत्पदं 'नार्कल्पि'रिति तस्य पदस्य योऽवयवः प्रत्ययसङ्घातः कल्पिशब्दस्तद्भक्त इत्यर्थः ।

---

उ०—नृकल्पेति । नृशब्दात्कल्पप्प्रत्ययः । पदसंज्ञेति । स्वादिष्वित्यनेन । यद्यसौ कल्पशब्दावयवः स्यात्तदा स्वावयवभूतरेफान्तस्य 'ना'रित्यस्य न स प्रत्ययः परः स्यादिति भावः । परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणं यावान् स सर्वोऽपि गृह्यते, न तदवयवोऽपीति तात्पर्यम् । ननु प्रत्ययस्य कथं पदत्वमत आह—पदशब्देनेति । कल्पिरूपः पदसङ्घातः पदसमुदाय इति भाष्यार्थः । तस्मात्पक्षत्रयेऽपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः । वृद्धेर्बहिरङ्गाऽसिद्धत्वं तु नोक्तम्, त्रिपादीस्थेऽन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः ।

भाष्ये उपदेश इति वर्तत इति । अचः कर्त्रित्यत्र तास्यनुदात्तेदित्यत इत्यर्थः ।

---

‡ ६ । १ । १८६

अथवा पुनरस्तु परादिः ।

**परादावकारलोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटोऽव्यवस्था-ऽभ्यासलोपोऽभ्यस्तताऽदिस्वरो दीर्घत्वं च ॥ १० ॥**

यदि परादिः, अकारलोपः प्रतिषेध्यः । कर्ता हर्ता । 'अतो लोप आर्द्धधातुके'+ इत्यकारलोपः प्राप्नोति ।

नैष दोषः, उपदेश इति वर्तते ×। यद्युपदेश इति वर्तते—धिनुतः कृणुतः* अत्र लोपो न प्राप्नोति । नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते । किं तर्हि ? आर्धधातुकमभिसंबध्यते—आर्धधातुकोपदेशे यदकारान्तमिति । अकारलोप ।

औत्व—औत्वं च प्रतिषेध्यम् । चकार जहार । 'आत औ णलः' [ ७।१।३४ ] इत्यौत्वं प्राप्नोति ।

नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ती'त्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? रेफेण व्यवहितत्वात् । औत्व ।

---

**प्र०—धिनुत इति** । एकवचनेऽसत्यप्यकारलोपे आद्गुणेन वा, त्रिकरणस्य वा गुणे पररूपेण वा धिनोतीति सिध्यतीति द्विवचनमुदाहृतम् ।

**आर्धधातुकोपदेश इति** । सन्नियोगेन चाऽकारस्य विधानादार्धधातुकप्रतिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः ।

**निर्दिश्यमानस्येति** । नन्वादेः परस्येति रेफस्यौत्वेन भाव्यम् । नैष दोषः, 'णल' इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं, तस्याऽकारान्तादङ्गादुत्तरस्यादेशः प्रवर्तते, सरेफस्य त्वनुमीयमानत्वादादेशाऽभावः । प्रत्याय्यप्रत्याययकाऽभेदविवक्षायां षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते । **रेफेणेति** । यद्रूपं षष्ठीनिर्दिष्टमकारमात्र तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट इति च तदा व्यवधानाऽभावात् स्यादेवादेश. ।

---

**उ०—भाष्ये–अथवा पुनरस्तु परादिरिति** । वंवधारणविसर्जनीयप्रतिषेधयोः **कर्त्त**व्यतायाः पूर्वान्तपरादिपक्षयोः समत्वात् परादिपक्षो वा वक्तव्यः, पूर्वान्तो वेत्यत्र न विशेष **इति** चेत् **कश्चिद् ब्रूयात्तत्राह** वार्तिककारः—**परादावितीत्यर्थः** । 'परादा'विति वार्त्तिके पुगन्तद्वन्द्वस्य प्रतिषेधपदेन **षष्ठीतत्पुरुषः** । **'वक्तव्य'** इति शेषः । चङ्युपधाह्रस्वत्वं वक्तव्यम् । अग्रे सर्वत्राऽयमेव शेषो बोध्यः ।

**उपदेश इति वर्तत इति** । अतो लोप इत्यत्रानुदात्तोपदेशेत्यत इत्यर्थः । **पररूपेण—अतोगुणे** इत्यनेन ।

**नन्विति** । 'आदेः परस्ये'ति । 'निर्दिश्यमान'परिभाषाबाधकमित्यभिमानः । **'तस्यैवायमनुसंहार'** इत्युत्तरम् । ननु सूत्रे उच्चारितस्य णलो नादेशः, किंतु तत्प्रत्यायिताऽकारस्येति षष्ठीनिर्दिष्टस्यादेशा इत्युक्तं स्यादत आह—**प्रत्याय्येति** निर्दिश्यमानस्ये'त्यस्य प्रतिपादितस्येत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरिति बोध्यम् । **यदि त्विति** । तथा तु वक्तुमशक्यं, सर्वत्रादेशापत्तेरिति भावः ।

---

\+ ६।४।४८ × ६।४।३७ * ३।१।८०

पुक्प्रतिषेधः । पुक् च प्रतिषेध्यः । कारयति हारयति । 'आतां पु'गिति† पुक् प्राप्नोति । पुक्प्रतिषेधः ।

चङ्युपधाह्रस्वत्वम्—चङ्युपधाह्रस्वत्वं च न सिध्यति। अचीकरत् अजीहरत् । 'णौ चङ्युपधाया ह्रस्वः' [ ७ । ४ । १ ] इति ह्रस्वत्वं न प्राप्नोति । चङ्युपधाह्रस्वत्वम् ।

इटोऽव्यवस्था—इटश्च व्यवस्था न प्रकल्पते । आस्तरिता निपरिता । इडपि परादौ रेफोऽपि । तत्र व्यवस्था न प्रकल्पते । इटोऽव्यवस्था ।

अभ्यासलोपः—अभ्यासलोपश्च वक्तव्यः । वव्रृते वव्रृधे । 'अभ्यासस्ये'ति हलादिशेषो न प्राप्नोति‡ । अभ्यासलोपः ।

अभ्यस्तस्वरः—अभ्यस्तस्वरश्च न सिध्यति । मा हि स्म ते पिपरुः, मा हि स्म ते बिभरुः । 'अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुके'+इत्येष स्वरो न प्राप्नोति । अभ्यस्तस्वर ।

तादिस्वरः—तादिस्वरश्च न सिद्ध्यति । प्रकर्ता प्रकर्तुम् । तादौ च निति कृत्यतौ' [ ६ । २ । ५० ] इत्येष स्वरो न प्राप्नोति ।

नैष दोषः । उक्तमेतत्—"कृदुपदेशे वा ताद्यर्थमिडर्थम्"×इति । तादिस्वरः ।

---

प्र०—आस्तरितेति । नित्यत्वाद्गुणे रपरत्वे च कृते 'नेड्वशि कृती'ति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था । प्रवृत्तौ वा रेफात् पूर्वं इडित्यनिष्टा व्यवस्था प्राप्नोति ।

---

उ०—कथं तर्हीडपीत्यादिभाष्यमत आह—प्रवृत्तौ वेति । नेड्वशीत्यत्रोपदेश इत्यपकृष्योपदेशे वशादेरेव निषेध इति भावः ।

भाष्ये—वव्रृत इति । ऋवर्णान्ताभ्यासस्याऽदित्यर्थे पूर्वं तलोपे पश्चाद्रेफः, तस्य लोप इति पक्षे इदम् । 'वव्रे' इत्यप्युदाहार्यम् ।

प्रकर्तेति । तृन् । एष स्वरः—पूर्वपदप्रकृतिस्वरः ।

कृदुपदेशकालिकतादिप्रत्ययप्रतीत्यर्थं तादाविति सूत्रे कृद्ग्रहणमिति भाष्योदाहृतवार्त्तिकार्थः । तादावितिसूत्रेण गतेः स्वरो विधीयते । क्रियायोगे च गतित्वम् । क्रियावाची च धातुः । तत्र तिङन्ते पूर्वपदाऽभावेन कृदन्त एव सिद्धमिति कृद्ग्रहणमुक्तार्थम् । न च कृद्ग्रहणाऽभावे तादित्वमुत्तरपदस्य विशेषणं स्यात् । तथा च प्रतरितेत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति वाच्यम् । श्रुतनिष्प्रत्ययविशेषणताया एव न्याय्यत्वादिति दिक् ।

---

† ७ । ३ । ३६ १—अचीकरदिति । अत्र हि णिनिमित्तायां वृद्धावाकारस्यानुपधात्वाच्चणी चङीत्यनेन ह्रस्वत्वं न स्यात् । ‡ ७ । ४ । ६० + ६ । १ । १८६ × ६ । २ । ५० सूत्रे २ वार्तिकम् ।

**दीर्घत्वम्—दीर्घत्वं च न सिध्यति । गीः पूः । 'रेफवकारान्तस्य धातो'-रिति* दीर्घत्वं न प्राप्नोति ॥ ५१ ॥**

## अलोऽन्त्यस्य ॥ १ । १ । ५२ ॥

**किमिदमल्ग्रहणमन्त्यविशेषणमाहोस्विदादेशविशेषणम् ? किं चातः ? यद्यन्त्यविशेषणम्, आदेशोऽविशेषितो भवति । तत्र को दोषः ? अनेकालप्यादेशोऽन्त्यस्य प्रसज्येत ।**

**यदि पुनरलन्त्यस्येत्युच्येत, तत्रायमप्यर्थः—'अनेकाल्शित्सर्वस्य' [ १ । १ । ५५ ]इत्येतन्न वक्तव्यं भवति । इदं नियमार्थं भविष्यति—'अलेवान्त्यस्य भवति,**

---

प्र० —**गीरिति** । अन्तरङ्गत्वाद्विलोपे कृते इत्वे रपरत्वे च सुपोऽयमादी रेफ इति कल्पनायां रात्सस्येति सलोपे कृते दीर्घत्वं न स्यादिति पूर्वान्तपक्षोऽत्र स्थितः ।

**अलोऽन्त्यस्य** । **किमिदमिति** । षष्ठीप्रथमयोर्निर्देशस्य साम्यात् प्रश्नः ।

**यदि पुनरिति** । प्रथमाबहुवचनमल इति यदि व्याख्यायेतेत्यर्थः । अस्मिंश्च पक्षे—'रहोरजसां लोपश्चे'ति लोपः सर्वादेशः प्राप्नोति—विरजीकरोतीति । **इदं नियमार्थमिति** । अन्त्य-

---

उ०—ननु रेफस्य परादित्वेऽपृक्तत्वाऽभावाद्विलोपो न प्राप्नोतीति कुतो नोक्तमत आह—**अन्तरङ्गत्वादिति** । तदानीं सुपोऽभावादाह—**कल्पनायामिति** । पदस्य विभज्यान्वाख्यानमिति भावः । **पूर्वान्तेति** । नार्कुटादौ वचनेनैव निर्वाहो भाष्ये उक्त इति बोध्यम् । एवं च 'रपर' इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरिति ध्वनितम् । अवयवत्वं चाऽवयवसादृश्ये पर्यवस्यति । न हि वर्णस्य वर्णान्तरमवयवो भवति । अत एव प्रसङ्गावस्थायां रपरत्वेपि गुणादिशब्देन विधानम् । 'यदागमा' इति न्यायेन विशिष्टस्य गुणादित्वात् । एवं च अवर्णादचि पूर्वपरयोरन्तरतमो रपरोऽण् भवतीत्यर्थ इति बोध्यम् । गुणादिशब्देनारारोर्ग्रहणाभावे तु 'ऋकारस्य गुणवृद्धी अरारावेवे'ति नियमो न स्यात् । यतो गुणादिशब्देन अकारादे रेफः परो यस्मात्तादृशस्य विधानम् । गुणत्वादिकं चाऽकारादिनिष्ठमेव । तेन च नान्तर्यम् । एतदेवाभिप्रेत्य **रदाभ्यामिति** सूत्रे भाष्ये 'गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तत' इति वक्ष्यति । अत एव 'यद्यन्त इति वर्त्तते ततः पूर्वान्त' इत्युपक्रमस्थं भाष्यमेकदेश्युक्तिः । तथा हि सति यथा परादिपक्षे नार्कल्पिरित्यादौ रेफस्य कल्पीति समुदायावयवत्वोपपत्तये परत्वपर्याप्त्यधिकरणादिरित्यर्थस्तथा पूर्वान्त इत्यस्य पूर्वत्वपर्याप्त्यधिकरणाऽन्त इत्यर्थापत्तौ उक्तदोषो 'रदाभ्या'मिति सूत्रस्थभाष्यविरोधश्चेत्याहुः ॥ ५१ ॥

**अलोन्त्य** । भाष्ये—'**प्रसज्येते**'त्यनन्तरं 'तन्निवृत्तयेऽ'नेकाल् सर्वस्ये'ति वाच्यं स्या'दिति शेषः ।

नन्व'लन्त्यस्ये'त्युच्यमाने सूत्रभेदः स्यादत आह **प्रथमेति** । बहुत्वस्याऽविवक्षितत्वं दर्शयितुमेवमुक्तमिति भावः । **प्राप्नोतीति** । लोपस्याऽभावरूपत्वेनाल्रूपत्वाऽभावादिति भावः । एवं चायं पक्षो दुष्ट एव । 'वसस्याची'ति लोपे प्रकृते 'लुग्वा दुहे'ति लुग्ग्रहणस्य—प्रथमान्तपक्षेऽल्ग्रहणमनेकाल्भिन्नलक्षकमित्यर्थज्ञापकत्वमिति नायं दोष इति भाष्याशयमन्ये । भाष्ये—**इदं नियमार्थमितीदमा सूत्रं तु न परामृश्यते,**

---

* ८ । २ । ७६

नान्य' इति । एवमप्यन्त्योऽविशेषितो भवति । तत्र को दोषः ? वाक्यस्यापि पदस्याप्यन्त्यस्य प्रसज्येत ।

यदि खल्वप्येषोऽभिप्रायस्तत्र क्रियेतेति, अन्त्यविशेषणेऽपि सति तत्र करिष्यते । कथम् ? 'ङिच्च, अलोऽन्त्यस्ये'त्येतन्नियमार्थं भविष्यति—'ङिदेवानेकालन्त्यस्य भवति नान्य' इति ।

किमर्थं पुनरिदमुच्यते ?

**अलोऽन्त्यस्येति स्थाने विज्ञातस्याऽनुसंहारः ॥ १ ॥**

अलोऽन्त्यस्येत्युच्यते, स्थाने विज्ञातस्यानुसंहारः क्रियते—स्थाने प्रसक्तस्येति ।

---

प्र०—स्यादेशा भवन्तीत्यलोऽप्याक्षेपादल्ग्रहणमनल्व्यावृत्त्यर्थमिति भावः ।

**वाक्यस्याऽपीति** । दोषपरत्वादेवमुक्तम्, न तु वाक्यं षष्ठीनिर्दिष्टमस्ति । पदस्य तु परमानडुद्ध्यामित्यत्रानडुच्छब्दस्यान्त्यस्य सर्वस्य दत्वं प्राप्नोति ।

**यदि खल्वपीति** । अवश्यकर्तव्योऽसौ योगोऽपवादविप्रतिषेधार्थं । अथ लाघवमात्रे आदरस्तत्राप्युच्यते—**अन्त्यविशेषणेऽपीति** ।

**स्थाने विज्ञातस्येति** । 'षष्ठी स्थानेयोगे'त्यनुवर्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता

---

उ०—अप्राप्ताऽन्त्यादेशविध्यर्थत्वात्तस्य, किंत्वल्पदमिति तस्य नियमार्थत्वमुपपादयति—**अन्त्यस्येति** । **अलोऽपीति** । अलात्मकादेशस्यापीत्यर्थः । **अपिनाऽनेकालोऽपि** ।

**नन्विति** । **षष्ठीस्थाने** इत्यनुवर्त्य स्थानषष्ठीबोधिताऽन्त्यस्येति व्याख्यानादित्यर्थः । यत्तु 'यथातथयथापुरयो' रिति सूत्रे 'न यथातथा अयथातथाऽयथातथाभावोऽयाथातथ्य'मिति भाष्यदर्शनात्तत्प्रामाण्येन निपातसमुदायात् प्रत्ययो, निपातसमुदायेन नञ्समास इत्यङ्गीकार्यम् । तत्राऽयथातथाशब्दात्ष्यञि यस्येति लोपोऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्त्यस्य यथातथेति पदसमुदायस्य स्यादिति, तन्न, 'निर्दिश्यमान'परिभाषया सिद्धेः । तदनाश्रयेण वा तदुक्तिः । **पदस्य त्विति** । अधिकृतपदस्येत्यस्य वस्वादिभिर्विशेषणादित्यर्थः ।

यदि खल्विति पराभिप्रायं वदता सूचितमन्यादृशं स्वाभिप्रायं प्रकटयति—**अवश्येति** । **असौ योगः**—'अनेकाल्शि'दिति योगः । 'अतो भिस'इत्यादावादेः परस्येत्यादिबाधानार्थ इति भावः । नन्वस्यावश्यकत्वेऽन्त्यविशेषणेऽपीत्यादिग्रन्थोऽसङ्गतोऽत आह—**अथेति** । अलिति प्रथमान्तं मण्डूकानुवृत्त्या 'ऽऽदेः परस्ये' त्यत्र संबध्यत इति ऐसादौ न दोषः । तातङ्यपि ज्ञापकात्सर्वादेशत्वं भविष्यतीति भावः । भाष्ये—**ङिदेवानेकालन्त्येति** । अल्रूपङित्यस्य फलाऽभावादनेकालिति लब्धम् । एवं चास्य सूत्रस्यानेकालादेशेऽप्रवृत्त्यैतस्मादृचर्याशादेः परस्येत्यस्याप्यनेकाल्यादेशेऽप्रवृत्तिरिति दिक् ।

**किमर्थं पुनरिति** । किं स्थानषष्ठीनिर्देशविषयमुत षष्ठीमात्रविषयमिति प्रश्नः ।

स्थाने विज्ञातस्य कस्येत्यपेक्षायामाह—**षष्ठीति** । स्थाननिरूपितसंबन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः । नन्वेवं विज्ञाताया इति वक्तुं युक्तमत आह—**आदेश इति** । स्थानषष्ठीसंबन्धादादेशत्वेन यो

**इतरथा ह्यनिष्टप्रसङ्गः ॥ २ ॥**

**इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः ।**
**यदि पुनरयं योगशेषो विज्ञायेत ?**

**योगशेषे च ॥ ३ ॥**

**योगशेषे च । किम् ? अनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः ।**
**तस्मात्सुष्ठूच्यते—'अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहार इतरथा ह्यनिष्ट-**

---

प्र०—साऽन्त्यमलमनुसंह्रियते । आदेशो वा यो निश्चितः सोऽन्त्यस्याऽलः स्थाने इत्यनुसंह्रियते ।

**इतरथेति** । यदि षष्ठीमात्रमनुसंह्रियेतेत्यर्थः । तत्र लवितेति तृच ऋकारात्पूर्वमिट् प्राप्नोतीति दोषः । दापयतीति पुगाकारस्य स्यात् । ततश्च **यदुक्तमर्थवतो ह्यागम** इति, तन्न युज्यते ।

**यदि पुनरिति** । 'षष्ठी स्थानेयोगे'त्यनेनास्यैकवाक्यता । अत्र तु प्रकरणे करणं 'ङिच्चे'-त्यादेः सम्बन्धार्थम् । तत्रायमर्थो भवति—शास्त्रे या षष्ठी साऽन्त्येऽलि, सा च स्थानेयोगैवेति, न तु स्थाने विज्ञातस्य पश्चादनुसंहार', प्रतिपत्तिगौरवप्रसङ्गादिति भावः ।

**अनिष्टमिति** । 'आद्यन्तौ टकितौ मिदचोऽन्त्यात्पर'इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते, तुल्यजातीयत्वात्सम्बन्धस्य सम्बन्धान्तरेण बाधोपपत्त्या । षष्ठ्यास्तु यद्रूपं तदन्त्य एवाऽल्यवस्थितमिति पूर्ववद्दोषप्रसङ्ग । अनुसंहारः पुनरनुसंहारान्तरेणादे. **परस्यानेकाल्शित्सर्वस्येत्यनेन**

---

उ०—विज्ञात इत्यर्थः । अन्ये तु **अलोऽन्त्यस्येति** यदुच्यते, तेन **स्थाने विज्ञातस्य** समुदायस्थाने प्रसक्तस्यान्त्येऽल्यनुसंहार उपसंहारः, तत्स्थानिकत्वमात्रं क्रियते बोध्यत इति भाष्याक्षरार्थः । **स्थाने विज्ञातस्येत्यस्य**— व्याख्या **स्थाने प्रसक्तस्येति** । कैयटव्याख्याने एतद्वैयर्थ्यं भातीत्याहुः ।

**षष्ठीमात्रमिति** । उपलक्षणमेतत्, षष्ठीमात्रोच्चारणेन विधीयमानं चेत्यपि बोध्यम् । **ततो यदुक्तमिति** । आकारावयवत्वे प्रणिदापयतीत्यादौ णत्वं न स्यादित्यर्थः । नचावयवावयवः समुदायावयव इति निर्वाहः, यस्याऽवयवस्तद्विशिष्टे यत्र तदवयववृत्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायाऽवयवत्वबुद्धिर्हि लोकसिद्धा, यथा भुजावयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादौ । न चैवमत्राऽऽकारावयवपकारादिविशिष्टेऽवर्णत्वादिबुद्धिः । **अर्थवत आगमे तु** तद्विशिष्टे तदर्थवत्त्वबुद्ध्या तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति भवितेत्यादावङ्गावयवत्वं सम्भवतीतीटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वं तु वाचनिकं गौणम् । तत्र 'यावद्वचनं वाचनिक'मिति न्यायेन समुदायावयवत्वे मानाऽभाव इत्याशयः ।

**संबन्धार्थमिति** । अन्त्यस्येत्यनेनेति भावः । **शास्त्रे येति** । या षष्ठी सा स्थानेयोगैव सा, चान्त्येऽलीति तु नार्थः । स्थानेयोगेति पदावृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवम् । तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवान्त्येऽल्येव चेति वाक्यार्थ इति भावः । **सा चेति** । सा षष्ठी स्थानेयोगैव चेत्यन्वयः ।

**स्थानेयोगत्वमेव बाध्यत इति** । अत्र हेतुः—**तुल्येत्यादिरुपपत्त्येत्यन्तः** । **संबन्धस्येत्यादि** । संबन्धनिरूपकस्य संबन्धनिरूपकान्तरेणेत्यर्थः । 'सन्नियोगशिष्ट'न्यायस्तु न परिभाषाविषये, तस्मिन्नित्यादेरुत्तराङ्गविक-

प्रसङ्ग' इति ॥ ५२ ॥

## ङिच्च ॥ १ । १ । ५३ ॥

**तातङ्ङन्त्यस्य स्थाने कस्मान्न भवति ? 'ङिच्चालोऽन्त्यस्ये'ति प्राप्नोति† ।**

**तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ॥ १ ॥**

**तातङि ङित्करणं सावकाशम् । कोऽवकाशः ? गुणवृद्धिप्रतिषेधार्थो ङकारः‡ । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशो भविष्यति ।**

---

प्र०—बाध्यते ॥ ५२ ॥

**ङिच्च । विप्रतिषेधादिति ।** नन्वयमपवादः, 'अनेकाल्शि'दित्युत्सर्गः । उत्सर्गापवादयोश्चाऽयुक्तो विप्रतिषेधः । नैतदस्ति । ङित्त्वस्याऽन्यार्थत्वसंभवे सति दौर्बल्यात् । सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवाऽत्र विषयेऽस्य नास्ति ।

---

उ०—लायास्तत्रतत्रोपस्थितिस्वीकारादित्याशयः । **इत्यनेन बाध्यत इति** । नत्वाद्यन्तौ टकिताविन्यनेनेति भावः ॥ ५२ ॥

**ङिच्च** । भाष्ये—**कस्मान्न भवतीति** । येन नाप्राप्तिन्यायेनाऽस्याऽनेकाल्शित्यपवादत्वादिति भावः । उत्तरस्य त्वयं भावः—नेदमपूर्वविधायकम्, किंतु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकाल्त्वेतद्बाधानुवादकम् । अनुवादफलं तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः । एवं च प्रकृते नास्य प्रवृत्तिः । प्रवृत्तौ हि शास्त्रस्याऽपूर्वविधायकतापत्त्या गौरवापत्तिः । एवं च यत्र सर्वादेशे ङित्त्वस्य वैयर्थ्यं तत्र तद्बाधः । यत्र तु न, तत्र न तद्बाध इति भावः ।

**विप्रतिषेधादिति** । परिभाषात्वविरोधादित्यर्थः । यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात्तदाऽनुवादत्वाऽसंभवेन परिभाषाप्रकरणविरोध इति भावः । यथा चैतत्तथानुपदमेव स्पष्टीभविष्यति । 'विप्रतिषेधे पर'मिति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्, सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजम् । नह्यस्य सूत्रस्य सर्वादेशाऽप्राप्तिविषये क्वचिच्चारितार्थ्यम् । अवश्यप्राप्तिरेव च बाध्यत्वे बीजं दृष्टम् । किंच विप्रतिषेधशास्त्रपरवार्त्तिकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैली भाष्यकारस्य दृश्यते, न चात्र तथोक्तं भगवता । यद्यप्यन्यत्रानुवादत्वं शास्त्रस्य दोष उक्तः, तथापि परिभाषाणां नियमरूपत्वेन तासु गुण एव । तत्र हि प्राप्तानुवादादेवेतरनिवृत्तिरर्थात् । यथा 'व्रीहीन्वहन्ती'त्यादौ प्राप्तावघातानुवादेन नखविदलनादिनिवृत्तिः । यथा च 'तस्मिन्नि'त्यादौ प्राप्तपूर्वस्येत्याद्यनुवादेन परादिनिवृत्तिः । किंच कप्, यप्, अबादिष्वनन्यार्थपित्त्वेषु चरितार्थस्या'ऽनुदात्तौ सुप्पिता'वित्यस्य जित्वरीत्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वापि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिस्तदाह—**दौर्बल्यादिति** । परिभाषात्वभङ्गकृतं तदिति भावः । **सन्दिग्धेति** । आपाततः सन्देहः, पर्यालोचने त्वनुपस्थितिरेवेति भावः । तदाह—**अपवादत्वमेवेत्यादि** । ङित्त्वसामर्थ्यकृतं हि तत्त्वमिति भावः ।

---

† ७ । १ । ३५ ‡ १ । १ । ५

प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यदि चायं नियोगतः सर्वादेशः स्यात्तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत्—ङित्करणादयं सर्वादेशो भविष्यति, न पुनरन्त्यस्य स्यादिति ।

एवंतर्ह्येतदेव ज्ञापयति—न तातङ्ङन्त्यस्य स्थाने भवतीति, यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरण+ एव ब्रूयात्—'तिह्योस्तादाशिष्यन्यतरस्याम्' इति ॥ ५३ ॥

## आदेः परस्य ॥ १ । १ । ५४ ॥

### अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः ॥ १ ॥

'अलोऽन्त्यस्ये'त्युत्सर्गः । तस्य 'आदेः परस्य' 'अनेकाल् शित्सर्वस्ये'त्यपवादौ । अपवादविप्रतिषेधात्तु सर्वादेशो भविष्यति । 'आदेः परस्ये'त्यस्यावकाशः—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' [ ६ । ३ । ९७ ] द्वीपम् अन्तरीपम् । 'अनेकाल्शित्सर्वस्ये' त्यस्याऽवकाशः—'अस्तेर्भूः' [ २ । ४ । ५२ ] भविता भवितुम् । इहोभयं प्राप्नोति—'अतो भिस ऐस्' [ ७ । १ । ९ ] । 'अनेकाल् शित् सर्वस्ये'-त्येतद्भवति विप्रतिषेधेन ।

शित्सर्वस्येत्यस्यावकाशः—'इदम इश्' [ ५ । ३ । ३ ] इतः इह । 'आदेः परस्ये'त्यस्यावकाशः—स एव । इहोभयं प्राप्नोति—'अष्टाभ्य औश्' [ ७ । १ । २१ ] । 'शित्सर्वस्ये'त्येतद्भवति विप्रतिषेधेन ॥ ५४ ॥

---

प्र०—**प्रयोजनं नामेति** । सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात् । तदेव तु सर्वादेशत्वमलभ्यं, ङित्वादन्त्यस्यैव प्रसङ्गादिति भावः । **ङित्करणादिति** । गुणवृद्धिप्रतिषेधार्थादिति भावः ।

**एवंतर्हीति** । अन्तरेणापि ङित्त्वमेरुरित्यत्र प्रकरणे तातिविधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्त्वमिति विज्ञायते ॥ ५३ ॥

---

उ०—ननु ङित्वं सर्वादेशत्वद्वारा गुणबाधनार्थं वा, उताऽन्यत्र क्लृप्तसर्वादेशत्वबाधफलकं वेति शङ्कते भाष्ये—**प्रयोजनं नामेति** । **सति सर्वादेशत्वे इति** । अन्त्यादेशत्वे तु तत्संपादनेनैवावयवे ङित्त्वस्य चारितार्थ्येन समुदायोपकारकत्वे मानाऽभावात् प्रत्ययस्य ङित्त्वाऽभावेन न गुणादिप्रतिषेधप्राप्तिरित्यर्थः । **ङित्त्वादिति** । गुणवृद्धिप्रतिषेधार्थत्वे सिद्धे सर्वादेशत्वम्, तस्मिंश्च तत्त्वमित्यन्योन्याश्रयेण सर्वादेशत्वाऽलाभेऽन्त्यस्यैव स्यादिति भावः ।

**अन्तरेणापीति** । तथाच तत्सामर्थ्यात्सर्वादेशत्वद्वारा गुणवृद्धिबाधनार्थत्वमेवास्येति भावः ॥ ५३ ॥

---

\+ ३ । ४ । ८६

## अनेकाल् शित्सर्वस्य ॥ १ । १ । ५५ ॥

शित्सर्वस्येति किमुदाहरणम् ? 'इदम इश्' [ ५ । ३ । ३ ] इतः इह । नैतदस्ति प्रयोजनम् । शित्करणादेवाऽत्र सर्वादेशो भविष्यति । इदं तर्हि—'अष्टाभ्य औश्' [ ७ । १ । २१ ] । ननु चाऽत्रापि शित्करणादेव सर्वादेशो भविष्यति । इदं तर्हि—'जसः शी' [ ७ । १ । १७ ] । 'जश्शसोः शिः' [ २० ] । ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति । अस्त्यन्यच्छित्करणे प्रयोजनम् । किम् ? विशेषणार्थः शकारः । क्व विशेषणार्थेनार्थः ? 'शि सर्वनामस्थानम्' [ १ । १ । ४२ ] 'विभाषा ङिश्योः' [ ६ । ४ । १३६ ] इति ।

शित्सर्वस्येति शक्यमकर्तुम् । कथम् ? अन्त्यस्यायं स्थाने भवन् प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात् । असत्यामित्संज्ञायां लोपो न स्यात् । असति लोपेऽनेकाल् । यदा अनेकाल्, तदा सर्वादेशः । यदा सर्वादेशस्तदा प्रत्ययः । यदा प्रत्ययः तदेत्संज्ञा × । यदेत्संज्ञा, तदा लोपः† ।

एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह तज्ज्ञापयत्याचार्योऽस्त्येषा परिभाषा

प्र०—अनेकाल् । शित्करणादेवेति । सति शकारेऽनेकाल्त्वादिति भावः । अनेकाल्त्वसम्पादनेन च कृतार्थः शकार इतीत्संज्ञकत्वाल्लुप्यत एव ।

अष्टाभ्य औशिति । आदेः परस्येत्यादेः प्राप्त इति भावः ।

अन्त्यस्यायमिति । ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशादादेः परस्येत्यादे-

उ०—अनेकाल् शित् । ननु शित्पदाऽभावे कथं शित्करणादेवेति भाष्यमत आह–सतीति । शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमादाय शास्त्रप्रवृत्तिरिति भावः । यत्त्वेतत्सामर्थ्यात् फलप्रत्यासत्तेश्च विधानोत्तरमेवेत्संज्ञादिशास्त्रप्रवृत्तिर्लक्ष्ये इति भावः इति । तन्न । अणुदित्सूत्रे इशि सवर्णग्रहणापत्तिपरभाष्येण सूत्रे एवेत्संज्ञालोपप्रवृत्तेः सूचनात् । नन्वेवं शकारादित्येव वक्तुं युक्तं किमित्पदेनेति चेत्, न, फलान्तराऽभावेऽपि शकारोच्चारणस्य सप्रयोजनत्वाल्लोप एवेत्कार्यमिति शस्येत्थं प्रवर्त्तत इति सूचयितुं तथोक्तेः । तदाह—अनेकाल्त्वेति ।

भाष्ये—ननु चात्रापीति । अपवादविप्रतिषेधादिति भावः । अस्त्यन्यदिति । एवंच तस्य सप्रयोजनत्वेन भूतपूर्वगत्याश्रयणे मानाऽभावेन नानेकाल्त्वात् सर्वादेशत्वमपि तु शित्त्वादेवेति शिद्ग्रहणं सूत्रे कार्यमिति भावः ।

सर्वादेशात्प्राक्प्रत्ययादित्वाऽभावेन नेत्त्वमिति प्रतिपादयितुमन्त्यस्यायमित्यादि भाष्यम्, तदाक्षिपति–

× १ । ३ । ८ † १ । ३ । ९

'नानुबन्धकृतमनेकाल्त्वं भवती'ति । किमेतस्य ज्ञापने प्रयोजनम् ? तत्राऽसरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारान्तत्वा' दित्युक्तं ‡, तन्न वक्तव्यं भवति ॥ ५५ ॥

**इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य**

**प्रथमे पादे सप्तममाह्निकम् ॥ ७ ॥**

---

प्र०—भाव्यं तत्किमुच्यतेऽन्त्यस्यायं भवन्निति । एवं तर्हि 'सर्वनाम्न'इति षष्ठीं मन्यते,'नपुंसका'-दिति च विहितविशेषणमिति ज्ञापकत्वमेव शित्करणस्य । अथवाऽसत्यपीह शिद्ग्रहणे अनेकाल्त्वादादेः परस्येत्येतद्बाधित्वा सर्वादेशो भविष्यतीति किं शिद्ग्रहणेनेति पुनरपि शिद्ग्रहणं ज्ञापकमेव । अनेकान्तेषु चानुबन्धेषु नास्त्येव '**नानुबन्धकृतमनेकाल्त्व**'मिति । एकान्तेषु च तेषु ज्ञापकेन प्रयोजनम् ॥ ५५ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य

प्रथमे पादे **सप्तममाह्निकम्** ॥ ७ ॥

---

उ०—**नन्विति** । ततश्च सर्वादेशत्वं विनापि प्रत्ययादित्वाल्लभ्यत एवेत्त्वमिति भावः । **षष्ठीमिति** । सर्वनामसम्बन्धिनो जसः शी, नपुंसकाद्विहितयोर्जश्शसोः शिरिति चार्थः । एवं च परशब्देन परस्य विधानाऽभावान्न तत्प्रवृत्तिरिति भावः । तयोः परशब्दयोगे पञ्चमीत्वेऽप्याह—**अथवेति** । **असत्यपि सूत्रे शिद्ग्रहण इत्यर्थः** । श्यादयो यावन्नादेशास्तावन्नेत्वलोपौ । आदेशाश्च परत्वात्सर्वस्यैवेति भावः । **नानुन्धकृतमिति** । **एवं च** शीप्रभृतीनामपि शित्वादेव सर्वादेशत्वं, तस्याप्यनुबन्धत्वात् । न च विधानकाले उक्तरीत्या तस्य तत्त्वज्ञानाऽभावः । तद्योग्यतयैव तत्त्वात् । अन्यथा कप्रत्ययादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्संज्ञालोपाविति विधानकाले कस्यानुबन्धत्वज्ञानाऽभावेन **नानुबन्धकृतमसारूप्यमित्यस्याऽप्राप्तौ** विकल्पापत्तेः । शिदित्यस्यापीत्संज्ञायोग्यककारवान्सर्वस्येत्यर्थ इति न दोष इति भाति । **अस्त्येषा परिभाषेति** । अनुबन्धानामल्व्यवहाराऽभावस्य ज्ञापनादिति भावः । अत एवाऽनुबन्धकार्येष्वनल्विधाविति स्थानिवत्त्वनिषेधो न । अन्यथा क्त्वो ल्यपः कित्त्वं न स्यात् । न च पूर्वमनुबन्धलोपे तद्रहितस्यैव स्थानित्वात्तस्य न स्थान्यवयवत्वम् । सूत्रे स्थानषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यतया तदवयवत्वस्य ककारे सत्त्वात् । अन्यथाऽग्रहीदित्यादाविट **ईटीति** दीर्घो न स्यादिति **स्थानिवत्सूत्रे** निरूपयिष्यामः । भाष्ये—**तत्रासरूपेति** । **असरूपे** कविषये णप्राप्तिर्दोषः । सर्वादेशे **दिव औदिति** सर्वादेशः स्यादिति दोषः । प्रतिषेधे दैपो भेदेन निर्देशः कार्यः । तृतीये हेतुरनाकारान्तत्वादितीत्यर्थः । ज्ञापकमनावश्यकमित्याह—**अनेकान्तेष्विति** । **एकान्तेषु चेति** । अयमेव मुख्यः पक्ष इति **तस्य लोप** इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥

**इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते** प्रथमाध्यायस्य

प्रथमे पादे **सप्तममाह्निकम्** ॥ ७ ॥

---

‡ १ । ३ । १० सूत्रे १० वार्तिकम् ।

# अथाष्टममाह्निकम्

## स्थानिवदादेशोऽनल्विधौ ॥ १ । १ । ५६ ॥

**वत्करणं किमर्थम् ? 'स्थान्यादेशोऽनल्विधा' वितीयत्युच्यमाने संज्ञाधिकारोऽयं तत्र स्थानी आदेशस्य संज्ञा स्यात् । तत्र को दोषः ? आङो यमहन आत्मनेपदं भवतीति+ वधेरेव स्याद्धन्तेर्न स्यात् । वत्करणे पुनः क्रियमाणे न दोषो भवति ।**

---

**प्र०—स्थानिवत्** । **वत्करणमिति** । विनापि वतिना तदर्थलाभो, यथा ङित्किदिति भावः । न च 'स्थान्यादेश' इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते इति कल्पनाऽऽश्रयितु युक्ता, अस्तेर्भू रित्यादेशविधानवैयर्थ्यप्रसङ्गात् । न च वचनद्वयप्रामाण्याद्विकल्प', 'वा लिटी'ति विकल्पाऽऽरम्भात् । **संज्ञाधिकार इति** । संज्ञाप्रस्ताव इत्यर्थः । **तत्र को दोष इति** । आदेशे कार्यसिध्यर्थोऽतिदेशः । तत्रादेशे कार्यं संज्ञासंज्ञिसंबन्धेनाऽपि सिध्यतीति प्रश्नः । **वधेरेवेति** । संज्ञा हि प्रदेशेषु संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य निवर्तते, न तु स्वत. कार्यं प्रतिपद्यत इति भावः । 'बहुगणे'त्यत्र तु सङ्ख्येत्यन्वर्थताश्रयणाल्लौकिकार्थग्रहणाद्विनापि वतिनाऽतिदेशपक्ष उपन्यस्तः । वत्करणात्त्विहाऽतिदेशेन स्थानिकार्याण्यादेशे क्रियन्ते न तु स्थानिनि निवर्त्यन्ते इत्यदोषः । ङित्किदिति तु संज्ञा न भवति, 'न क्त्वा से'डिति प्रतिषेधात् । नहि क्त्वः कित्संज्ञा

---

**उ०—स्थानिवदादेशः** । **स्थानिरूपमिति** । नच 'सिद्धं धर्मिण'मित्यादिन्यायेन पूर्वोच्चारितस्योद्देश्यत्वबोधकेन स्थान्यादेशरूपं प्रतिपद्यत इत्येवार्थो युक्त इति वाच्यम् । प्रसिद्धस्थानिनां प्रसिद्धादेशविधाने वैयर्थ्यापत्तेः । अन्यत्र विधाने तु 'स्थानेऽन्तरतम' इति सूत्रोक्तन्यायेनाऽव्यवस्थापत्तेः । तस्य न्यायस्य सूत्रकृताप्यत्र त्यागाच्च । अत एव भाष्यकृता 'स्थानी संज्ञे'त्येवोक्तं नत्वादेशः संज्ञेतीति बोध्यम् । **वा लिटीति** । न च 'चक्षिङः ख्या'ञित्यनेनाऽनेन च सर्वत्रार्धधातुके ख्याञो विकल्पे सिद्धे लिट्येव वेति नियमार्थं स्यादिति वाच्यम् । दोषदुष्टनियमापेक्षयैतत्सूत्रे एतदतिरिक्तार्थकत्वज्ञापकताया एवौचित्यात् । भाष्ये—**स्थानी आदेशस्येति** । **नवेतीत्यत इतिशब्दानुवृत्तेः स्थानिशब्दार्था** हनादय **आदेशपदार्थस्य** वधादेः **संज्ञे**त्यर्थः । स्थानिशब्दस्यादेशशब्दसंज्ञात्वे वैयर्थ्यमिति भावः । ननु स्वरितलिङ्गकानुवृत्तिरूपाधिकारस्य **संज्ञाविषयस्य** शास्त्रेऽभावादाह—**प्रस्ताव इति** । प्रस्तावः प्रकरणं बुद्धिसंनिधिरिति यावत् । पूर्वोत्तरत्र प्रायेण **संज्ञाया** दर्शनादिति भावः । परिभाषात्वं त्वनुक्तिसम्भवग्रस्तमिति तन्नोक्तम् । भाष्ये—**वधेरेवेति** । न **चैवमाङो वधयम** इत्येवाऽकारविवक्षणेन स्वतन्त्रवधिव्यावृत्तौ हन्ग्रहणं व्यर्थं स्यादिति वाच्यम् । 'आजघ्ने'-इत्यादिसकलहन्त्यादेशसंग्रहार्थं तस्य सत्वात् । **हन्तेर्न स्यादिति** । 'आहनिष्यत' इत्यादौ । नन्वत्र पाठे वतिं विनाऽतिदेशानवगतौ कथं 'बहुगणे'त्यत्रातिदेशपक्ष उक्तोऽत आह—**बह्विति** । **सङ्ख्येतीति** । सङ्ख्यापदस्येत्यर्थः । **लौकिकार्थग्रहणादिति** । सङ्ख्यानकरणरूपेत्यर्थः । एवं च तद्बाधापत्त्या संज्ञात्वासंभवादतिदेश इति भावः । इदं च तत्रैव सूत्रे कैयटे स्पष्टम् । **संज्ञा नेति** । उभयगतेरिह शास्त्रे सत्वेन संज्ञात्वेऽपि ङिदा-

---

\+ १ । ३ । २८

**स्थानिकार्यमादेशे अतिदिश्यते 'गुरुवद्गुरुपुत्रे' इति यथा ।**

**अथादेशग्रहणं किमर्थम् ? 'स्थानिवदनल्विधा'वितीयत्युच्यमाने क इदानीं स्थानिवत्स्यात् ? यः स्थाने भवति । कश्च स्थाने भवति ? आदेशः । इदं तर्हि प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यात् । एकदेशविकृतस्योपसंख्यानं चोदयिष्यति × तन्न वक्तव्यं भवति ।**

**अथ विधिग्रहणं किमर्थम् ? सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—अलः**

---

प्र०—विहिता, या प्रतिषिध्येत । 'किकिनौ लिट् चे'त्यत्र तु संज्ञाप्रकरणाऽभावात्तद्वदतिदेशः । 'स्थानिकार्य'मित्यनेन कार्यातिदेशोऽयमिति प्रदर्शयति । शास्त्राद्यतिदेशापेक्षया कार्यातिदेशस्य प्राधान्यात्, इतरेषां कार्यार्थित्वादिति भावः ।

**आदेशग्रहणमिति** । स्थानिशब्दस्य संबन्धिशब्दत्वादादेशो लभ्यत एव । यथा पितृवदित्युक्ते पुत्र इति गम्यत इति भावः । **क इदानीमिति** । द्विविध आदेशः, प्रत्यक्षश्चास्तेर्भूरित्यादिः । आनुमानिकश्चैरुरित्यादि । अत्र हि इकारेणेकारान्तः स्थान्यनुमीयते । उकारेणोकारान्तश्चादेशः । तनस्नेस्तुरिति संपद्यते । तत्र प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्येति भावः । **आदेशमात्रमिति** । प्रत्यक्षमनुमितं चेत्यर्थः । एरुरित्यत्र प्रत्यक्षमुकारस्यादेशत्वमिकारस्य च स्थानित्वम् । न च किंचिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत । तिशब्दकार्यं तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः ।

**सर्वविभक्त्यन्त इति** । सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति मत्वर्थीयोऽकारः । बहुत्वप्रतिपादनपरमेतत् । **नह्यत्र** सप्त विभक्तयः सम्भवन्ति । तत्र सबन्धमात्रे षष्ठ्युपादानेऽनेकविभक्त्य-

---

उ०—दिग्रहणेन चङादीनामपि ग्रहणम् । **नहीति** । अनुवृत्तकिद्ग्रहणस्य **संज्ञापरत्वेन सैव प्रतिषेध्या, नच सा** क्त्वो विहितेत्य**र्थः** । किंच किदित्यादेः संज्ञात्वे क्ङिति चे'त्यत्रास्य ग्रहणं न स्यात्, संज्ञास्वरूपानुच्चारणादिति बोध्यम् । तथा 'निष्ठाशीङि'त्यादिनिषेधोऽप्यसंबद्धः स्यात् । कित्साहचर्यान् ङिदित्यप्यतिदेशः । **कार्यातिदेशोऽयमिति** । एवं चाऽनपेक्षितशास्त्रमनपेक्षितनिमित्तं च प्रत्ययत्वादिरूपं कार्यमनेनैव क्रियते इति भावः ।

भाष्ये—**यः स्थाने इति** स्थानशब्दप्रयोगात् तदनुवृत्त्यादेशो लभ्यत इति भ्रमं व्युदस्यति—**स्थानीति** । नन्वादेशलब्धौ 'क' इति प्रश्नानुपपत्तिरित्यत आह—**द्विविध इति** । केचित्तु स्थानिशब्दस्य संबन्धिशब्दत्वमजानतः प्रश्नः—**क इति** । संबन्धिशब्दत्वाभिप्रायमुत्तरं—**यः स्थाने इति** । समाधत्ते—**आदेशमात्रमिति** । अस्याशयः कैयटोक्त एव । कैयटोक्तव्याख्यानेऽपि 'यः स्थाने' इत्यादि ग्रन्थस्याशयानभिज्ञवक्तृकतयैव योज्यमानत्वादित्याहुः । नन्वत्रापि प्रत्यक्षस्यैव स्थानिवत्त्वमस्त्वित्यत आह—**नचेति** । **पदत्वेति** । अत एव 'देवदत्तः पचत्वि'त्यत्र 'पदस्ये'त्यधिकृत्य विधीयमानो निघातः सिध्यति । 'पचतु ते ओदन'मित्यत्र पदादित्यधिकृत्य विधीयमानस्तेमयादिश्च सिध्यति ।

भाष्ये—**विधिग्रहणं किमर्थमिति** । विधावित्यध्याहाराल्लभ्यत इति प्रश्नः । ननु समासोत्तरं सप्तम्या एव श्रवणेन सर्वविभक्त्यन्तत्वं समासस्यानुपपन्नमत आह—**अवयव इति** । पूर्वपदरूप इत्यर्थः ।

---

× १ । १ । ५६ सूत्रे ६ वार्तिकम् ।

परस्य विधिः—अल्विधिः । अलोविधिः—अल्विधिः । अलि विधिः—अल्विधिः । अला विधिः—अल्विधिरिति । नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चाऽर्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा साऽऽश्र-

प्र०—र्थन्तिर्भावात् फलतः सर्वविभक्त्यन्तता सम्भवति। अथवाऽल्विधिशब्दवाच्योऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात्सर्वविभक्त्यन्तत्वम् । सति च विधिशब्दे समासभावादेतद्वस्तुलाभः । केवलस्त्वल्शब्द उपादीयमानो यद्विभक्तिरुच्चार्येत तदर्थोपक्षय एव स्यात् । तत्रालः परस्य विधिः—द्यौः पन्थाः सः । हल्ङ्याब्भ्य इति सुलोपो न भवति । अलि परतो विधिः—क इष्टः स इष्टः । हशि चेत्युत्वं न भवति । अलो विधिः—द्युकाम इति । लोपो व्योर्वलीति लोपो न भवति । उत्वं त्ववलि सावकाशं स्यादहर्विमलद्यु इति । अला विधि —महोरस्केनेति । अयोगवाहानामट्सूपदेशाण्णत्वं न भवति । प्रातिपदिकनिर्देशाश्चेति । अनलित्येतावदेवोच्यताम् । अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरुपादीयते, न तु तदर्थो विवक्ष्यते । यथा 'भाव' इत्यत्र

उ०—ननु विभक्तिचतुष्टयेनैव विग्रहस्याग्रे प्रदर्शनेन सर्वेत्यनुपपन्नमत आह—बहुत्वेति । द्वितीयाचतुर्थीप्रथमाभिः स्थान्यलः सूत्रेऽनिर्देशादिति भावः । ननु सकृच्छ्रुतेऽल्विधिपदे कथमल्पदस्यानेकविभक्त्यन्ततेत्यत आह—तत्रेति । विधिशब्दः कर्मसाधनः । तेनाल्संबन्धिकार्ये इत्यर्थः । प्रौढ्या पक्षान्तरमाह—अथवेति । अल्शब्दात्परो विधिशब्दोऽल्विधिशब्दस्तेन च तद्वाच्योऽर्थो लक्ष्यत इति भावः । एवं च तद्वाच्यत्वेन रूपेण सर्वार्थाश्रयणात्सर्वविभक्त्यन्तत्वे यत्फलं तत्फलसिद्धिरिति तात्पर्यम् । समासभावादिति । उपदर्शितपक्षद्वयोक्तसमाससत्त्वादित्यर्थः । यद्विभक्तिरिति । षष्ठ्युपादानेऽपि स्थानसंबन्ध एव बुध्येतेति भावः । तदर्थोपक्षय एव स्यादिति । तदर्थमात्रान्वितार्थक एव स्यादित्यर्थः । इष्ट इति । यजेः क्तः । यद्यपि 'क इष्ट' इति रूपमुत्वेऽपि सिध्यति, तथापि कविष्ट इति पक्षे स्यात्कयिष्ट इति न स्यादिति बोध्यम् । स इष्ट इत्यत्र एतत्तदोरिति नित्यो लोपः स्यादिति च बोध्यम् । दिवि कामोऽस्य द्युकामः । दिव उत् । यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथापि एतद्वाक्योपप्लुतवकारवदुकार इति वाक्योपात्तधर्मापेक्षया न तत्त्वम् । सूत्रकलृप्तस्थान्यादेशभावमादायैव हि एतत्कृतवाक्योपप्लव इति दिक् । उपदेशादिति । सस्य स्थानिवत्त्वेन विसर्गत्वाद्विसर्गस्य चादसूपदेशेनादत्वादिति भावः । केवलप्रकृतेः प्रयोगाऽभावादाह—अत्रेति । विवक्ष्यते इति । तत्समभिव्याहारे प्रतीयमानो विधेयत्वरूपोऽर्थो न विवक्ष्यत इत्यर्थः । अन्वयाऽयोग्यत्वादिति भाव. । लिङ्गेति । अतएव भूतिरित्यादिसिद्धिः । सप्तम्यर्थस्तु तत्र विवक्षित एवेति लिङ्गसंख्ये इत्येवोक्तम् । भाष्ये—अर्थतन्त्रा इति । स्वार्थमात्रबोधकविभक्त्यधीना इत्यर्थः । प्राधान्येन विभक्तिं—विशिष्य प्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति । निर्दिष्टे—बोधिते । पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थमन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते सा सा विभक्तिरध्याहार्या । साधुत्वार्थमुत्पन्नविभक्तेस्तु लुगिति भावः । एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम् । मा भेर्मा संविक्था इति पुरोडाशावदानमन्त्रस्य धानासूहे मा भैष मा संविक्थामित्यादौ दर्शनाच्च । तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येति तात्पर्यम् । नन्वनलिति प्रथमानिर्देशेऽनलात्मक आदेश इत्यर्थे ल्यपोऽनलात्मकत्वेन प्रपठयेत्यादावित् स्यात् । उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्त्वाऽभावात्पदत्वं न स्यादिति चेन्न, अदो जग्धिरिति सूत्रे

यितव्या ।

इदं तर्हि प्रयोजनम्—उत्तरपदलोपो यथा विज्ञायेत—अलमाश्रयते अलाश्रयः, अलाश्रयो विधिः—अल्विधिरिति । यत्र प्राधान्येनालाश्रीयते, तत्रैव प्रतिषेधः स्यात् । यत्र विशेषणत्वेनाऽलाश्रीयते, तत्र प्रतिषेधो न स्यात् । किं प्रयोजनम् ? प्रदीव्य प्रसीव्येति वलादिलक्षण इण्मा भूदिति* ।

किमर्थं पुनरिदमुच्यते ?

**स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद्गुरुपुत्र इति यथा ॥१॥**

अन्यः स्थानी, अन्य आदेशः । 'स्थान्यादेशपृथक्त्वात्' तस्मात्कारणात्स्थानिकार्यमादेशे न प्राप्नोति । तत्र को दोषः ? 'आङो यमहन आत्मनेपदं भवती'ति† हन्तेरेव स्याद्वधेर्न स्यात् । इष्यते च वधेरपि स्यादिति, तच्चान्तरेण यत्नं न सिद्ध्यति । तस्मात् स्थानिवदनुदेशः । एवमर्थमिदमुच्यते । 'गुरुवद्गुरुपुत्र इति यथा' । तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्य' मिति गुरौ यत्कार्यं तद्गुरुपुत्रेऽतिदिश्यते । एवमिहापि स्थानिकार्यमादेशेऽतिदिश्यते ।

---

प्र० —लिङ्गसंख्ये इति भाव. ।

**उत्तरपदलोप इति** । 'अन'लित्युच्यमाने यत्र कार्ये स्वातन्त्र्येणाऽलाश्रीयते, तत्रैव निषेधः स्यात्—क इष्ट स इष्ट इत्यादौ । प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात् । नहीड्विधौ वलः स्वातन्त्र्येणाश्रयणम्, वलादेरित्यन्यपदार्थस्य प्राधान्याद्गुणभावाद्वल । उत्तरपदलोपे त्वलाश्रयत्वादिड्विधेः प्रतिषेधसिद्धिः । **अलमाश्रयत इति** । अर्थप्रदर्शनमेतत् । एवं ह्यलाश्रय इति स्यात् । तस्मादाश्रीयत इत्याश्रयः । एरच् । अल्—आश्रयो यस्येति अलाश्रयः । अलाश्रयो विधिरल्विधि । अलाश्रयत्वाद्विधिरेवाऽलित्युच्यत इति गतार्थत्वादप्रयोग एव उत्तरपदस्य लोपः ।

**किमर्थमिति** । तत्स्थानापत्त्या तद्धर्मलाभात्स्थानिकार्याण्यादेशाः प्राप्स्यन्तीति भावः ।

**स्थान्यादेशपृथक्त्वादिति** । स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिद्ध्यतीति भाव ।

---

उ०—ल्यब्ग्रहणेनादेशविशेषणत्वाऽभावज्ञापनादित्यदोषः ।

**स्वातन्त्र्येण**—प्राधान्येन । सकलविधिपरिग्रहार्थविधिशब्देन **प्रधानन्यायो** बाध्यत इति भावः । **एवं हीति** । कर्मण्यणा पचाद्यचो बाधादिति भावः । शब्दाऽनित्यत्ववारणाय वार्त्तिकप्रत्याख्यानाय चाऽऽह—**अप्रयोग एवेति** । भाष्ये—**यत्र प्राधान्येनेत्यस्य** विधिग्रहणाऽभावे' इत्यादिः । **'प्रतिषेधो न स्या'** दित्यस्य **'तदर्थं विधिग्रहण'**मिति शेषः ।

ननु पृथक्त्वमङ्गीकृत्यैव तत्स्थानापत्त्या तद्धर्मलाभेऽभिहिते **स्थान्यादेशपृथक्त्वादिति** हेतुरसङ्गतोऽत आह—**स्थानिस्वरूपेति** । **स्वं** रूपमित्युक्तेर्न तत्स्थानापत्त्या शास्त्रे तत्कार्यलाभ इति भावः ।

---

* ७ । २ । ३५        † १ । ३ । २८

नैतदस्ति प्रयोजनम् । लोकत एतत्सिद्धम् । तद्यथा–लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कार्याणि । तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनादीनि लभते । यद्यपि तावल्लोक एष दृष्टान्तः, दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति । अस्ति चेह कश्चित्पुरुषारम्भः ? अस्तीत्याह । कः ? स्वरूपविधिर्नाम‡ । हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्याद्वधेर्न स्यात् ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—स्थानिवदादेशो भवतीति, यदयं 'युष्मदस्मदोरनादेशे' [ ७ । २ । ८६ ] इत्यादेशप्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशे [ ऽपि ] स्यात् । पश्यति त्वाचार्यः—'स्थानिवदादेशो भवती' ति, अत आदेशे प्रतिषेधं शास्ति ।

इदं तर्हि प्रयोजनम्—अनल्विधाविति प्रतिषेधं वक्ष्यामीति । इह मा भूत्—द्यौः पन्थाः स इति+ ।

एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'अल्विधौ स्थानिवद्भावो न भवती' ति, यदयम्—'अदो जग्धिर्ल्यप्ति किति' [ २ । ४ । ३६ ] इति 'ति किती' त्येव सिद्धे ल्यब्ग्रहणं करोति ॥ तस्मान्नार्थोऽनेन योगेन ।

---

प्र०—लोकत इति । लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः । उपाध्यायस्येति । प्रसङ्गापेक्षेयं षष्ठी । न तु शिष्यविशेषणमेतत्, व्यभिचाराऽभावात् ।

प्रतिषेधं वक्ष्यामीति । न ह्यप्रदर्शितविषय. प्रतिषेधः शक्यो विधातुमिति भावः ।

एवं तावल्लिङ्गेनाऽभिमतोऽर्थः सिद्ध इति प्रदर्शितम् ।

---

उ०—व्यभिचाराऽभावादिति । तत्स्थानापत्त्या तद्धर्मलाभे दृष्टान्तोऽसङ्गतः स्यादिति च बोध्यम् । यद्यप्युपनीय सर्ववेदाध्यापकरूपाचार्यशिष्यव्यावृत्तये–उपध्यायस्येति तद्विशेषणमावश्यकम् । वेदैकदेशाध्यापको ह्युपाध्यायः । तथापि तद्व्यावृत्तौ प्रयोजनाऽभाव इत्यभिप्रायेणेदमिति बोध्यम् । अत्र भाष्ये लोकत एतत्सिद्धमित्युक्त्वा स्वं रूपमिति शास्त्रादादेशे न स्यादिति सूत्रं कार्यमित्युक्तम् । तेन स्वं रूपमिति शास्त्राऽविषये लोकन्यायेन सिद्धमिति सूचितम् । अनल्विधाविति निषेधोऽपि शास्त्रीयस्थानिवद्भाव एव, अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयः । एवं च लोलुव इत्यादावनादिष्टादचः पूर्वत्वं लोकन्यायेन भवत्येवेति केचित् ।

अप्रदर्शितविषयः—अप्रदर्शितप्रतिषेध्यः । ननु युष्मदस्मदोरनादेश इत्यत्र विभक्तिविषये स्वंरूपमित्यस्य लोकन्यायबाधकस्याऽप्राप्त्या तत्र लोकन्यायेन प्राप्ततद्धर्मलाभप्रयुक्तकार्यनिवारणेन चरितार्थस्य अनादेशग्रहणस्य ज्ञापकत्वाऽसंभवाद्धनो वधेत्यादौ दोषवारणायेदं सूत्रमावश्यकमिति चेन्न । स्वादिसूत्रे स्वं रूपमित्यस्य प्रवृत्त्या तत्स्वरूपाणामेव सुप्संज्ञकत्वेन तेषामेव विभक्तिसंज्ञकत्वेन तत्र 'तत्स्थानापत्त्या तद्धर्मलाभ' इति लौकिकन्यायाऽप्रवृत्तेरित्याशयात् ।

---

‡ १ । १ । ६८ + ७ । १ । ८४, ८५, ७ । २ । १०२

आरभ्यमाणेऽप्येतस्मिन् योगे—

**अल्विधौ प्रतिषेधेऽविशेषणे ऽप्राप्तिस्तस्याऽदर्शनात् ॥ २ ॥**

अल्विधौ प्रतिषेधेऽसत्यपि, विशेषणे समाश्रीयमाणे, असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रदीव्य प्रसीव्य । किं कारणम् ? 'तस्याऽदर्शनात्' । वलादेरित्युच्यते ×, न चाऽत्र वलादिं पश्यामः ।

ननु चैवमर्थ एवायं यत्नः क्रियते—'अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्या' दिति । सत्यमेवमर्थो न तु प्राप्नोति । किं कारणम् ?

**सामान्यातिदेशे विशेषानतिदेशः ॥ ३ ॥**

सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा—'ब्राह्मणवदस्मिन्

---

प्र०—इदानीं क्रियमाणेऽपि सूत्रेऽनल्विधाविति न कर्तव्यमित्याह—**अल्विधौ प्रतिषेध** इति । प्र[1]पठ्येतीण्ण भवति, इड्विधौ हि वलादेरिति विशेषणमाश्रितम् । तच्च 'क्त्वो ल्य'बिति वस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम् । तथा 'हीडादिरपि क्त्वा भवत्येव, क्त्वा केवलोऽपि, आकारान्तोऽपि, स्नात्वीतीकारान्तोऽपि, दत्त्वायेति च यगन्तोपि, इष्ट्वीनमिति मान्तोपि । तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्ययत्वाऽव्ययत्वादि तदादेशेऽतिदिश्यताम्, न तु वलादित्वमिति ल्यपो न स्वतो, नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेति भावः ।

**ब्राह्मणवदिति** । सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते तत्र विशेषस्याऽशब्दार्थ-

---

उ०—**क्रियमाणेऽपीति** । मन्दमत्यनुग्रहायेत्याशयः । **न पदान्तेत्यत्र** निषेध्यसमर्पणाय चावश्यकं तदिति बोध्यम् । **'अनल्विधाविति न कर्त्तव्य'**मित्यस्य विधिपदघटितं न कर्तव्यमित्यर्थः । **असत्यपीति** भाष्ये च्छेदः । **अल्विधौ प्रतिषेध** इत्यस्य चैतद्विशेषणम् । अप्राधान्येनालाश्रयणेऽपि निषेधार्थं क्रियमाणं विधिग्रहणेऽसत्यपीत्यर्थः । वार्तिके—**अविशेषणे** इति च्छेदः । लक्ष्ये विशेषणाऽभावे इति तदर्थः । तदाह—**विशेषणे समाश्रीयमाण इति** । विधाविति शेषः । **असतीत्यादेः** प्रयोग इति शेषः । **सामान्यातिदेशे विशेषानतिदेश** इति हेतुं व्याचक्षाणो वलादित्वस्य विशेषत्वं दर्शयति—**तच्चेति** । **अविवक्षितत्वादिति** । विवक्षाकारणयत्न-विशेषविषयीकृतत्वाऽभावादित्यर्थः । उपात्तरूपव्याप्यरूपविवक्षाऽपि यत्ने सत्येव भवति । अत एव **सनि मीत्यत्र सः सीत्यतः** सीत्यनुवर्त्तितम् । न च तथा कश्चिद्यत्नः प्रकृते । एवं च वलादेरादेशो वलादिवदित्येवं वाक्यकल्पनाऽत्र नेति भावः । तत्र वलादित्वस्य क्त्वाव्याप्यत्वं दर्शयितुमाह—**तथाहीति** । **आकारान्तोऽपीत्यादि** दृष्टान्तार्थम् । **यत्कार्यमिति** । यो धर्म इत्यर्थः । 'क्त्वावल्ल्य'बित्येव वाक्यकल्पनेति भावः ।

**सामान्यातिदेशे** इत्यादिवार्तिकखण्डमवतारयति—**ननु चेति** । भाष्ये एवमर्थशब्दं व्याचष्टे—**अन्यस्येति** ।

**अशब्दार्थत्वादिति** । यद्यपि क्त्वावदित्युक्तेऽशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति तथापि व्याप्येन

---

× ७ । २ । ३५    १—'प्रदीव्य' इति पाठान्तरम् ।

क्षत्रिये वर्तितव्य'मिति सामान्यं यद्ब्राह्मणकार्यं, तत्क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते । एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते ।

यद्येवम् अग्रहीत्* 'इट ईटि [ ८ । २ । २८ ] इति सिचो लोपो न प्राप्नोति ? अनल्विधाविति पुनरुच्यमान इहापि प्रतिषेधो भविष्यति-प्रदीव्य प्रसीव्येति ।

---

प्र०—त्वाद्विशेषाश्रयकार्यानतिदेश. । यत्र तु विशेषशब्दोपादानेनाऽतिदेशस्तत्र विशेदातिदेशो भवत्येव ।

**अग्रहीदिति । ग्रहोऽलिटि दीर्घ** इति दीर्घे कृत इति भावः । दीर्घविधौ ह्यच्परिभाषोपस्थानादच एव स्थानित्वम् । इट् त्वजन्तराणां व्या.वर्तक इतीट्कार्यं विशेषकार्यत्वान्न प्राप्नोति । तथा प्रदीव्येति गुणप्रतिषेधो न प्राप्नोति । देवित्वेत्यादावकितोऽपि क्त्वाप्रत्ययस्य

---

उ०—व्यापकानुमानात्तदुपस्थितिवद्व्याप्योपस्थितौ मानाऽभाव इति भावः । **यत्र त्विति । गोतो णिदित्यादौ ।**

अथ सिद्धान्ती विशेषानतिदेशे दूषणं वदन् तज्ज्ञापनार्थमेवानल्विधावित्यावश्यकमित्याह—भाष्ये **यद्येवमिति** । यदि विशेषानतिदेश इत्यर्थः । **दीर्घे कृते इति** । दीर्घदृष्ट्या सिज्लोपस्याऽसिद्धत्वादिति भावः । ननु दीर्घस्य 'इट' इति समुदायस्थानिकत्वेन तद्वृत्तीट्त्वाश्रयो लोपः स्थानिवत्त्वेन स्यादेव, स्थानी चादेशविधावुपात्त एवेत्यत आह—**दीर्वेति** । नन्वच एव स्थानित्वे 'ग्रहण'मित्यादावपि दीर्घः स्यादत आह—**इटस्त्विति** । भाष्ये'सिचो लोपो न प्राप्नोती'त्यस्य 'तस्मादनल्विधाविति वक्तव्य'मिति शेषः । विशेषानतिदेशे दूषणान्तरमाह—**तथेति** । **अकितोऽपीति** । '**न क्त्वा से**'**डिति** किल्वनिषेधादिति भावः । **तस्मादिति** । न च क इष्टः, द्युभ्यामित्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम् । अप्राधान्येनाऽप्यलाश्रयणे 'आर्धधातुकस्ये'ड्वित्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम् । विशेषानतिदेशे तेषामसङ्ग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात् । वार्तिकेऽपि विधिपदघटिते प्रतिषेधेऽसत्यपीत्यर्थः । ज्ञापिते विशेषातिदेशेऽनल्विधावित्यस्य चारितार्थ्यं दर्शयति भाष्ये—**इहापि प्रतिषेधेत्यादि** । ननु कित्वस्याऽल्विधित्वेन **क्ङिति चेति** निषेधे स्थानिवत्त्वाभावात् प्रतिदीव्येत्यादौ गुणः स्यादत आह—**अनुबन्धेति** । **स्थानिनीति** । स्थान्यलाश्रये विधौ स्थानिवत्त्वनिषेधादिति भावः । 'न ल्यपी'ति लिङ्गमप्यत्र बोध्यम् । नन्वेवमप्यग्रहीदिति दीर्घस्थानिभूताऽपेकाराश्रय एव सिज्लोपः, अनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये **विशिष्टं ह्येष इति** । एवं च दीर्घ इड्वदित्येवातिदेशकल्पना, स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेव । तच्च नाऽल्रूपमिति इट इत्यादि न स्थान्यल्वृत्तिधर्माश्रयम् । एवं च यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् तत्स्थानिसंबन्धी वा योऽल् तन्मात्रवृत्तिधर्माश्रयणं तादृशे विधौ हि निषेधः । अत्र च शब्दतो विशिष्टमनलमाश्रयते । वलादेरित्यत्र च शब्दतो विशिष्टमलमिति भावः ।

**सिद्धान्तव्यवस्थापनाविति** । इदं निरनुबन्धकानुवादेन विहितादेशविषयम् । '**क्त्वो ल्य**' **बित्यादौ** सानुबन्धकानुवादेनादेशविधौ तु यथाऽनुबन्धकार्यस्याल्विधित्वाऽभावस्तथाऽनेकाल्शि' दित्यत्र निरूपितम् । **अत्रापीट एव स्थानित्वमिति** । अन्यथा स्थान्यल्वृत्तीट्त्वाश्रयस्य लोपस्याऽल्विधित्वात्तत्र तत्स्थानिवत्त्वाऽ

---

* ७ । २ । ३७

विशिष्टं ह्येषोऽलमाश्रयते वलं नाम । इह च प्रतिषेधो न भविष्यति—अग्रहीदिति । विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम ।

यदि तर्हि सामान्यमप्यतिदिश्यते विशेषश्च ।

**सत्याश्रये विधिरिष्टः ॥ ४ ॥**

सति च वलादित्व इटा भवितव्यम् । अरुदिताम् अरुदितम् अरुदित† । किमतो यत्सति भवितव्यम् ?

**प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ॥ ५ ॥**

प्रतिषेधस्तु प्राप्नोति । किं कारणम् ? 'अल्विधित्वात्' । अल्विधिरयं भवति । तत्राऽनल्विधाविति प्रतिषेधः प्राप्नोति ।

---

प्र०—संभवात् । कित्त्वस्यापि वलादित्ववन्न स्यादतिदेश । तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्तव्यमिति भावः । अनुबन्धकार्येषु चाऽनल्विधाविति प्रतिषेधो न प्रवर्तते, स्थानिन्यनुबन्धस्याऽसन्निधानात् । 'असन्त एवानुबन्धाः कार्यस्य विशेषका' इति सिद्धान्तव्यवस्थापनात् । **विशिष्टं ह्येषोऽनलमिति । इट ईटीति** सलोपे समुदायरूपेणाश्रयणादग्रहोऽलिटि दीर्घ इत्यत्रापि इट एव स्थानित्वं नाऽच. । अनियमाऽप्रसङ्गान्नियमफलाया अच्परिभाषाया अनुपस्थानात् ।

**सत्याश्रय इति** । आश्रीयत इत्याश्रयः । यथा वलादित्वमिड्विधौ । तत्रेडागमस्याऽल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति ।

---

उ०—नापत्तिर्विशेषातिदेशेऽपीति भावः । एवं च तदुदाहरणे विशेषानतिदेशेऽपि न दोषः । एतदेवाऽभिप्रेत्य स्वयं 'प्रदीव्ये' ति गुणापत्तिर्विशेषानतिदेशे दूषणमुक्तम् । वस्तुतो भाष्योक्तदोषोऽपि दृढ एव । तथा हि अनल्विधावित्यस्याऽभावे प्रायोगिकस्थानिनमादायैव वाक्योपप्लवः स्यात् । तद्बुद्धिं निवर्त्यैवादेशबुद्धेर्जायमानत्वेन तस्यैव मुख्यस्थानित्वात् । **यद्येवमित्यस्य** विशेषानतिदेशमाश्रित्य विधिग्रहणाऽकरणे **इत्यर्थः** । एवं च दीर्घस्थान्यलः परस्य कार्यं लोप इति स्थानिवद्भावेन तदप्राप्तिरिति पूर्वपक्ष । विधावित्युक्तौ तु न दोषः, शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यादेशभावस्य, निमित्तस्य च ग्रहणमिति न दीर्घोऽल्विधिरित्युत्तरम् । तदेतदेषोऽनलमित्यनेन दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम् । अत एव **'भोभगोअघो'** इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मरुत्वाश्रयं कार्यं नाऽल्विधित्वादित्युक्तम् ।

भाष्ये **यदि तर्हि सामान्यमिति** । अनल्विधाविति ज्ञापकात् । तज्ज्ञापनार्थं चाऽनल्विधाविति यदि क्रियत **इत्यर्थः** । **'आश्रय'**शब्दस्य भावसाधनत्वे **वलादित्व इति** तद्विवरणमसंगतं स्यादत आह—**आश्रीयत इति** । **स्थानिकार्यमिति** । सार्वधातुकत्वाऽभावादिति भावः । भाष्ये—**प्रतिषेधश्चेति** । 'आदेशः स्थानिवत्, अलाश्रये विधौ तु ने'ति सूत्रार्थ इति भावः ।

---

† ७ । २ । ७६

**न वाऽऽनुदेशिकस्य प्रतिषेधादितरेण भावः ॥ ६ ॥**

न वैष दोषः । किं कारणम् ? 'आनुदेशिकस्य प्रतिषेधात्' । अस्त्वत्राऽऽनुदेशिकस्य वलादित्वस्य प्रतिषेधः, स्वाश्रयमत्र वलादित्वं भविष्यति ।

नैतद्विवदामहे वलादिर्न वलादिरिति । किं तर्हि ? स्थानिवद्भावात्सार्वधातुकत्वमेषितव्यम् । तत्राऽनल्विधाविति प्रतिषेधः प्राप्नोति ।

किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवत्याहोस्विदविशेषेण—आदेशे, आदेशिनि च ? कश्चाऽत्र विशेषः ?

**आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ॥ ७ ॥**

आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्; तत्र लघूपधगुणः प्राप्नोति‡ । वधकमित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं चाऽदुपधत्वन्तत्र वृद्धिः प्राप्नोति+ । पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र [लघूपध-]गुणः प्राप्नोति× ।

---

**प्र०—न वेति** । अतिदेश एवानुदेशः, स प्रयोजनं यस्य तदानुदेशिकम् । तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमि[ ती ] ड्विधास्यते । **तत्रानल्विधावितीति** । इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते । इट् चाऽल्विधिरिति अनल्विधाविति प्रतिषेधात्सार्वधातुकत्वस्यापीडर्थत्वादिण्न प्राप्नोतीति ।

इदानीं यथाऽत्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह—**किं पुनरिति** । आदेशोऽस्यास्तीत्यादेशी—स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधोऽथाऽल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयतेऽथ वा व्याप्तिरिति भावः ।

**वधक इति** । हन्तेर्ण्वुलि 'बहुलं संज्ञाछन्दसोरिति वक्तव्यमत्रवधकगात्रविचक्षणाजिराद्यर्थ'मिति बधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः ।

---

**उ०—समाधत्ते—नवेति** । स **प्रयोजनं** प्रयोजको यस्य वलादित्वस्येत्यर्थः । करणे ल्युट् । पदसंस्कारपक्षाश्रयेण तु 'अतिदेशः प्रयोजन'मिति प्रयुक्तम् । शङ्कितेऽऽह **नैतद्विवदामह इति** । ननु सार्वधातुकत्वस्याऽल्धर्मत्वाऽभावात्कथं प्रतिषेधप्राप्तिरत आह—**इडागमेति** ।

उक्तदोषमपरिहृत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह—**इदानीमिति** । **प्रतिपादयितुमिति** । वादिमुखेनैव प्रतिपादयितुमित्यर्थः । **आदेशोऽस्येति** । आदेशिनीत्यलीत्यनेन व्यधिकरणं, स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अल एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् । सन्देहबीजं दर्शयति—**किमिति** ।

**स्थानिवद्भावादिति** । 'अचः परस्मि'न्नित्यनेन । एवं चोपधात्वाऽभावो ञ्णित्परत्वाऽभावश्चेति भावः ।

---

‡ ६ । ४ । ११०; ७ । ३ । ८६ + २ । ४ । ५४ सूत्रस्थेन १२ वार्तिकेन, ७ । २ । ११६
× ७ । ३ । ७८; ६

अस्तु तर्ह्यविशेषेण—आदेश आदेशिनि च ।

**आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसङ्ख्यानम् ॥ ८ ॥**

आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूसङ्ख्यानं कर्तव्यम् ।

सुप्—वृक्षाय प्लक्षाय । स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च यञादित्वं; तत्र प्रतिषेधः प्राप्नोति* । सुप् ।

तिङ्—अरुदिताम् अरुदितम् अरुदित । स्थानिवद्भावात्सार्वधातुकसंज्ञा, स्वाश्रयं च वलादित्वं; तत्र प्रतिषेधः प्राप्नोति† । तिङ् ।

कृदतिदिष्टम्—भुवनम् सुवनम् धुवनम् । स्थानिवद्भावात्प्रत्ययसंज्ञा, स्वाश्रयं चाऽजादित्वं, तत्र प्रतिषेधः प्राप्नोति‡ ।

किं पुनरत्र ज्यायः ? आदेशिन्यल्याश्रीयमाणे प्रतिषेध इत्येतदेव ज्यायः । कुत एतत् ? तथा ह्ययं विशिष्टं स्थानिकार्यमादेशेऽतिदिशति—'गुरुवद्गुरुपुत्र इति यथा' । तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात्+ पादोप-

प्र०—सुप्तिङ्कृदतिदिष्टेष्विति । आदिष्ट एवातिदिष्टो विवक्षितः । उपलक्षणं चैतत् । तद्धितादेशेष्वपि न प्राप्नोति, लैगवायन इति । अत्र हि स्वाश्रयमजादित्वं, स्थानिवद्भावात्तद्धितत्वम् ।

किं पुनरिति । न्यायापेक्ष प्रकर्ष । क पक्षो न्यायोपपन्न इत्यर्थ । **आदेशिनीति** । प्रत्यासत्त्येति भावः । यत्कार्यमादेशः स्वतो न प्रतिपद्यते, तस्य तत्र स्य दतिदेशाकाङ्क्षा । तच्छेषश्च प्रतिषेधस्तद्द्वारक एवाल्कार्ये युक्तः । अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्राति-

उ०—अतिदेशोऽतिदिष्टं चेदर्थासङ्गतिरत आह—**आदिष्ट एवेति** । सुबादीनामादेशेष्वित्यर्थः । तेषु दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति । **तद्धितत्वमिति** । भस्य तद्धिते ओर्गुणविधानादिति भावः ।

ननु पक्षद्वयेऽपि दोषोक्तेः कस्यापि प्रशस्यत्वाभावादातिशयिकोऽनुपपन्न इत्यत आह—**न्यायेति** । युक्तीत्यर्थः । का युक्तिः प्रकृष्टेऽथ्यत्र प्रश्नतात्पर्यमिति भावः । **प्रत्यासत्त्येति** । अत एव कष्टायेत्यादिनिर्देशाः सङ्गच्छन्ते । एवं च प्रत्यासत्त्याश्रयणमेव न्याय्यमिति भावः । भाष्ये—**विशिष्टं स्थानिकार्यमिति** । स्वरूपे-

* ७ । १ । १३; ७ । ३ । १०२ † ३ । ४ । १०१; ७ । २ । ७६

‡ ७ । १ । १; ६ । ४ । ७७

+ उच्छिष्टभोजनशब्दस्यायमर्थो यद् ब्रह्मचारी भैक्ष्यमाहृत्य सर्वं गुरवे समर्पयेत्, ततश्च गुरुणाऽनुज्ञात उत्+शिष्टं शुद्धं पृथक् स्थापितं भोजनमश्नीयाद् भुक्तवति गुरौ ।

तथा चाह मनुः—

समाहृत्य तु तद्भैक्ष्यं यावदन्नममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥

(मनुस्मृतिः २ । ५१)

संग्रहणाच्चे'ति । यदि च गुरुपुत्रोऽपि गुरुर्भवति तदपि कर्तव्यं भवति ।

अस्तु तर्ह्यादेशिन्यल्याश्रीयमाणे प्रतिषेधः । ननु चोक्तम्—'आदेशयल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेध' इति । नैष दोषः । 'करोतौ तपरकरणनिर्देशात्सिद्धम्' । पिबिरदन्तः । वधकमिति नायं ण्वुल्, अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा ।

**एकदेशविकृतस्योपसङ्ख्यानम् ॥ ६ ॥**

एकदेशविकृतस्योपसंख्यानं कर्तव्यम् । किं प्रयोजनम् ? पचतु पचन्तु × । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ।

प्र०—देशाकाङ्क्षा । सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवाऽतिदेशेन प्राप्यते । यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते, तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशाऽपेक्षेत्येतावता दृष्टान्तः । सार्वधातुकत्वं प्रत्ययस्त्येवाऽतिदेशापेक्षा ।

करोताविति । अकारस्य ऋकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणाऽपि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः । अन्योयमिति । हनो वध चेति क्वुन्प्रत्ययः ।

एकदेशविकृतस्येति । एकदेशेन विकृत इति तृतीयासमासः ।

---

उ०—णालम्भमानमित्यर्थस्तदाह—यत्कार्यमिति । तच्छेषः—अतिदेशशेषः । तद्द्वारके-अतिदेशद्वारके । यथेति । एवं च यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं, न तु स्वाश्रयगुरुत्वप्राप्तस्य, एवमलंशेऽतिदेशप्राप्तात्विधेरेव वर्जनमिति भावः ।

भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थमित्याह—अकारस्येति । अन्तरतमत्वादिति भावः । ऋकारस्थानिकावयवविकारोऽत्रेति लक्ष्यभेदान्नोदवोढमितिवन्न लक्षणस्येति न्यायेनात्र निर्वाह इत्याहुः । क्वुनौणादिकः ।

बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः स्यादत आह तृतीयेति । आनुमानिकेऽपि स्थानिवत्त्वप्रवृत्तिर्वक्तव्येत्येतद्वार्तिकतात्पर्यम् ।

---

भुक्तावशिष्टस्याशुद्धभोजनस्य तु तत्रैव शास्त्रे निषेधाद् "गुरोरुच्छिष्टभोजन" मित्यस्य वाक्यस्य विपरीतार्थग्रहणं तु शास्त्रविरुद्धमेव । तद्यथा—

नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा । न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेत् ॥

(मनुस्मृतिः २ । ५६)

अस्य वाक्यस्य महर्षिदयानन्दकृतोऽर्थ इहोद्ध्रियते—

"(प्रश्न) "गुरोरुच्छिष्टभोजनम्" इस वाक्य का क्या अर्थ होगा ?

(उत्तर) इसका यह अर्थ है कि गुरु के भोजन किये पश्चात् जो पृथक् अन्न शुद्ध स्थित है उसका भोजन करना अर्थात् गुरु को प्रथम भोजन कराके पश्चात् शिष्य को करना चाहिये ।"

(सत्यार्थप्रकाशे दशमसमुल्लासे)

× ३ । ४ । ८६

## एकदेशविकृतस्यानन्यत्वात्सिद्धम् ॥ १० ॥

'एकदेशविकृतमनन्यवद्भवती'ति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा—श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति ।

## अनित्यविज्ञानं तु तस्मादुपसङ्ख्यानम् ॥ ११ ॥

अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र स एवायं विकृतश्चेत्येतन्नित्येषु शब्देषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् ।

भारद्वाजीयाः पठन्ति—एकदेशविकृतेषूपसङ्ख्यानं कर्तव्यम् । किं प्रयोजनम् ?

---

प्र०—तद्यथेति । छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः । एवं पचत्वित्यत्रैकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथा चेकारलोपेऽप्यपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चाऽस्ति । नाऽश्व इति । अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः किं तर्हि, श्वत्वेनैवेत्यर्थः ।

अनित्यविज्ञानमिति । अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः । उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम् । पचत्विति स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणाद्वा उपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः ।

न चेम इति । तुशब्दादयः । पचत्वित्यत्र साक्षात्समुदायानुपादानात् । रूपान्यत्वा-

---

उ०—लोकन्यायाश्रयेणैतत्प्रत्याचष्टे—अनन्यत्वात् सिद्धमिति भाष्ये । नन्ववयवविगमे जात्यभिव्यञ्जकाऽभावात्कथं श्वेति व्यवहारोऽत आह—छिन्नेऽपीति । तथाचेति । लोपस्य विकारत्वाऽभावेनैकदेशविकृतोपसङ्ख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः । अर्थेत्यादि दृष्टान्तार्थम् । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यात् । एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः ।

अवस्थिते इति । न च इप्रसङ्गे उरिति वाच्यमिति नाऽनित्यत्वम् । अनर्थकत्वेनाऽर्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः । 'स एवाय'मिति प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम् । अत एव 'विकृत' इत्यनेन विरोधः । अनित्यत्वाऽभावे हेतुः—तेः प्रसङ्गे इत्यादि । अस्य ह्यर्थवत्त्वात्तेः प्रसङ्गे इत्युक्तिर्नासमञ्जसेत्यर्थः । तदुपपादकम्—पचत्वित्यादि । एवं च कार्यशब्दवादे न्यायेन सिद्धम्, नित्यशब्दवादे तु नेति वचनारम्भवादितात्पर्यम् । वस्तुतो वचनारम्भेऽपि विकृतत्वबुद्धिमात्रेण तत्सङ्गतिरित्यवश्यं वाच्यम् । अन्यथा 'विकृतस्ये'त्यसंगतं स्यात् । तदा तयैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति । अनित्यविज्ञानं त्वित्याद्येकदेश्युक्तिः ।

कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः । पचत्वित्यत्रेति । प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः । लोकन्यायेन सिद्धिखण्डनाय रूपान्यत्वाच्चेति । तद्व्याचष्टे—यदीति । इदमो म इत्यादिवदिति भावः । अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम् । 'एकदेशविकृतेष्वि'ति

पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् । किञ्च कारणं न स्यात् ? अनादेश-त्वात् । आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः । रूपान्यत्वाच्च । अन्यत्वे-ऽपि रूपं—पचतीति, अन्यत्पचत्विति । इमेऽप्यादेशाः । कथम् ? आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ।

**आदेशः स्थानिवदिति चेन्नानाश्रितत्वात्** । आदेशः स्थानिवदिति चेत् तन्न । किं कारणम् ? 'अनाश्रितत्वात्' । योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावा-देशः । नैतन्मन्तव्यं—'समुदाये आश्रीयमाणेऽवयवो नाश्रीयत' इति । अभ्यन्तरो हि समुदायस्यावयवः । तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति ।

**आश्रय इति चेदल्विधिप्रसङ्गः** । आश्रय इति चेदल्विधिरयं भवति । तत्रान-ल्विधाविति प्रतिषेधः प्राप्नोति । नैष दोषः । नैवं सति कश्चिदप्यनल्विधिः स्यात्, उच्यते चेदमनल्विधाविति, तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो योऽल्विधिरिति ।

---

प्र०—**च्चेति** । यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य, तस्मान्नास्ति तिङ्त्वमिति भावः ।

**योऽत्रादेश इति** । इकारस्य उकारः । **नासावाश्रीयते**—पदसंज्ञायाम् । सा हि तिशब्द-निबन्धना नावयवनिबन्धना । **यश्चेति** । तुशब्दः । साक्षादविधानान्नादेशः, पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः । अत्रोत्तरमाह—**नैतदिति** । 'तिप्' 'तस्' 'झि' इति तिप्सन्निवेशे इकारत-कारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा ।

**अल्विधिप्रसङ्ग इति** । इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः ।

---

उ०—बहुवचनेन लोपस्यापि सङ्ग्रहादपचदित्यादावपि स्थानिवत्त्वमिति बोध्यम् । भाष्ये वचनं खण्डयति—**इमेऽपीति** । आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः । इममाशयमजानानः पृच्छति—**कथमिति** । उक्तेनैवाभिप्रायेणाह—**आदिश्यत इति** । **इमेचेति** । तुशब्दादयः ।

आदेशपदसामर्थ्यमजानान आह—**आदेश इत्यादि** । प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः । तदाह—**योऽत्रेति** । ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह—**सा हीति** । तेश्च नायमादेश इति भावः । **तिङ्त्वं** समुदायपर्याप्तमिति तात्पर्यम् । स्थानिवत्त्वद्वारापि नायमु-कारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः । **आश्रीयते इत्यर्थ इति** । आश्रयितुमिष्यत इत्यर्थः । **तत्रो-त्तरमाहेति** । 'एकदेशी'ति शेषः । भाष्ये—**समुदाये इत्यादि** । 'सुप्तिङन्त' मित्यादौ 'ति' इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाऽभावात् तकारेकारान्तं पदमित्यर्थः । एवं चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः । **तिङ्त्वात्**—तदवच्छिन्नावयव-त्वात् । **तिङ्त्वं**—तदवच्छिन्नावयवेकारत्वमित्यर्थः । यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम् ।

ननु प्राधान्येनेत्युक्तौ प्रदीव्येति न सिध्येदत आह—**यत्रेति** । **प्रत्ययेति** । अनान्तरीयकेत्यर्थः ।

कथं साधीयः ? यत्र प्राधान्येनाल्लाश्रीयते । यत्र नाऽन्तरीयकोऽल्लाश्रीयते नासावल्विधिरिति ।

अथवोक्तमादेशग्रहणस्य प्रयोजनम् 'आदेशमात्रं स्थानिवद्यथा स्या'दिति ।

**अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ॥ १२ ॥**

स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते । किं कारणम् ? 'नित्यत्वात्' । स्थानी हि नाम—यो भूत्वा न भवति । आदेशो हि नाम —योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यादसतो वा प्रादुर्भाव इति ।

**सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् ॥ १३ ॥**

सिद्धमेतत् । कथम् ? यथा लौकिकवैदिकेषु च कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दो वर्तते । लोके तावत्—'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वो भवति । वेदेऽपि—'सोमस्य स्थाने पूतीकतृणान्यभिषुणुया'-दित्युच्यते । न च तत्र सोमो भूतपूर्वो भवति ।

**कार्यविपरिणामाद्वा सिद्धम् । १४ ॥**

अथवा कार्यविपरिणामात्सिद्धमेतत् । किमिदं कार्यविपरिणामादिति ? कार्या बुद्धिः सा विपरिणम्यते । ननु 'कार्याविपरिणामा'दिति भवितव्यम् । सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि । अपि च 'बुद्धिः संप्रत्यय'इत्यनर्थान्तरम् । कार्या बुद्धिः, कार्यः संप्रत्ययः । कार्यस्य संप्रत्ययस्य विपरिणामः—कार्यविपरिणामः, कार्यविप-

---

प्र०—**यत्र प्राधान्येनेति** । यत्र साक्षादल् निर्दिष्टः, तत्र प्रतिषेधो नानुनीयमाने सम्भवमात्रेणाऽलीत्यर्थः । प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् ।

**आदेशमात्रमिति** । आनुमानिकमपीत्यर्थः ।

**अनुपपन्नमिति** । एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम्, यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः ।

**सोमस्येति** । सोमस्तृणविशेषः । तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते ।

**कार्या बुद्धिरिति** । अन्यस्याऽत्र विपरिणामाऽसम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न

---

उ०—इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति—भाष्ये **अथवेति** ।

**सर्वविकार इति** । 'अस्तेर्भू'रित्यादौ । यो भूत्वेत्यादिभाष्यस्य प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वं नित्यत्वमिति तात्पर्यम् ।

स्थानशब्दः प्रसङ्गवाचीत्युत्तरम् । **तदसंनिधाविति** । नित्यस्यावश्यकर्तव्यत्वादारब्धस्य चावश्यकसमापनीयत्वादिति भावः ।

रिणामादिति ।

परिहारान्तरमेवेदं मत्वा पठितम् । कथं चेदं परिहारान्तरं स्यात् ? यदि भूतपूर्वे स्थानशब्दो वर्तते । भूतपूर्वे चापि स्थानशब्दो वर्तते । कथम् ? बुद्ध्या । तद्यथा—कश्चित्कस्मैचिदुपदिशति—'प्राचीनं ग्रामादाम्रा' इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः[1] पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्राऽऽम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चोपधीयमानान्[2] । नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः, बुद्धिस्त्वस्य विपरिणम्यते । एवमिहाप्यस्तिरस्मा अविशेषेणोपदिष्टः । तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता । सः 'अस्तेर्भूर्भवती'त्यस्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते† । स ततः पश्यति—बुद्ध्या अस्तिं चापकृष्यमाणं, भवतिं चोपधीयमानम्[2], नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च । बुद्धिस्त्वस्य विपरिणम्यते ।

---

प्र०—तु कार्यशब्दो बुद्धिपर्यायः । सन्तीति । ङ्याप्पोरित्यत्र बहुलग्रहणात् । भूतपूर्वे चापीति । न च नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते, न तु तद्वशादर्थानां तथाऽवस्थानम् । प्राचीनमिति । प्राचि देशे प्राक् । 'ततो विभाषाञ्चेरदिक्स्त्रिया'मिति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता । आम्राबुद्ध्या इति । तस्या अनन्तरमित्यर्थः ।

---

उ०—संज्ञाछन्दस्त्वयोरभावादाह—बहुलेति । भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम् । अन्यथानर्थक्यप्रसङ्गात् । न च तत्र स्थानशब्दो दृश्यते 'सोमस्य स्थाने' इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति 'यदिभूतपूर्वे'त्यादि भाष्यतात्पर्यम् । न चेति । भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः स्यादिति भावः । तत्पक्षे नित्यत्वं कथमिति पृच्छति—भाष्ये—कथमिति । उत्तरमाह—बुद्धयेति । प्रतिपत्तृवशादिति । प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते, तद्वशात् प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते, स्वतस्तद्वत्त्वस्य तत्र बाधादिति भावः । क्वचित्तु प्रतिपत्तिवशादिति पाठः । तदाह—नचेति । आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरिति भावः । ननु प्राचीनमित्यस्यात्राधिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह—प्राचीति । सप्तम्यन्तादुत्पन्नास्तातेरञ्चेर्लुगिति लुक् । भाष्ये—तस्य सर्वत्रेति । प्राग्देशवृत्तित्वावच्छिन्न इत्यर्थः । स तत्र—न्यग्रोधेषु । नन्वाम्रबुद्ध्या इति न तृतीया, अर्थासङ्गतेः, नापि षष्ठी, संबन्धिनोऽनुपस्थितेरत आह—तस्या अनन्तरमिति । अनन्तरपदाध्याहारेण षष्ठीति भावः । केचित्तु आम्रबुद्ध्या इत्यस्य ता विहायेत्यर्थ इत्याहुः । भाष्ये अपकृष्यमाणानिति । तत्र यथा बुद्धेरेवाऽपकर्ष उपधानं च आम्रेषु न्यग्रोधेषु चारोप्यते, तथाऽत्रापि बुद्धिगतोत्पादविनाशयोः स्थानन्यादेशभावस्य च शब्देष्वारोप इति भावः । उपधानमुत्पत्तिः ।

---

१—अवरोहः-जटा । 'शाखाशिफाऽवरोहः स्या'दित्यमरः ।

२—आधीयमानान्, आधीयमानमिति पाठान्तरे । † २ । ४ । ५२

**अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ॥ १५ ॥**

अपवादे उत्सर्गकृतं च प्राप्नोति । 'कर्मण्यण्' [ ३ । २ । १ ] 'आतोऽनुपसर्गे कः' [ ३ । २ । ३ ] इति । केऽपि अणिकृते प्राप्नोति । किं कारणम् ? 'स्थानिवत्त्वात्' ।

**उक्तं वा ॥ १६ ॥**

किमुक्तम् ? 'विषयेण तु नानालिङ्गकरणात् सिद्ध'मिति‡ । अथवा—

**सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥ १७ ॥**

सिद्धमेतत् । कथम् ? षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् । तत्तर्हि

---

**प्र०—अपवादप्रसङ्गस्त्विति** । बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः । 'कर्मण्य'णिति सर्वत्राऽण्बुद्धि प्रसक्ता 'आतोऽनुपसर्गे क' इति कबुद्धया निवर्तते इति केऽप्यण्कृतप्रसङ्गः ।

**विषयेण त्विति** । तुशब्द पुनरर्थे । यदयं गापोष्टगिति कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति—**'नोत्सर्गकृतमपवादे भवती'**ति ।

**षष्ठीनिर्दिष्टस्येति** । न चापवाद षष्ठीनिर्दिष्टस्य स्थाने विधीयते । 'नाभि नभंचे'त्यादौ षष्ठ्या स्थाने प्रथमाया विधानादस्ति षष्ठी । विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम् । यथोक्तं—'वालवायो विदूरं च प्रकृत्यन्तरमेव वे'ति । विश्रव शब्दास्त्वनभिधानात् प्रत्यया-

---

उ०—ननु उत्सर्गापवादयोः स्थान्यादेशभावाऽभावात् कथं स्थानिवत्त्वमत आह—**बुद्धीति** । **अणकृतेति** । ङीबित्यर्थः ।

भाष्ये 'उक्तं वे'ति वार्त्तिकस्थमुक्तमित्यंशं व्याचष्टे—**विषयेण त्वित्यादि** ।अइउणसूत्रे एकोऽकार इति पक्षेऽनुबन्धसङ्करः प्राप्नोति केऽप्यणकृतं प्राप्नोतीति पूर्वपक्षे 'विषयेण तु नानालिङ्गकरणात्सिद्ध'मित्युक्तम् । विषयेविषयेऽणकादौ भिन्नलिङ्गकरणात् 'इह मुण्डो भव, इह जटी भवे'ति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति तथा यल्लिङ्गो यत्रोच्यत तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः । एवं च सामान्यापेक्षरंत्वानियमस्य स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति भावः । वार्त्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया । कैयटोक्तव्याख्याने तु **अथवा यदयं श्यन्नादीनिति** वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम् । शब्दमर्यादया वार्त्तिकात्तदर्थाऽलाभश्च । तुशब्दस्य पुनरर्थत्वेऽपि नानापदानन्वयस्तदवस्थश्च । किंच कैयटोक्तार्थकं **विषयेण तु पुनर्लिङ्गकरणात्सिद्धमिति** भाष्ये तत्र पठितं नत्वेवमिति दिक् ।

तत्रत्यं वेत्यंशं व्याचष्टे—**अथवा सिद्धं त्विति** । अनुवर्तमानं षष्ठीति पदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्या विपरिणम्यत इत्याशयेनाह—**षष्ठीनिर्दिष्टस्येति** । नन्वेवं 'नाभि नभ'मित्यादौ षष्ठीनिर्देशाऽभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाङ्गत्वयोरभावाद्यस्येति लोपो न स्यादत आह—**नाभीति** । विधा-

---

‡ अ इ उण् सूत्रे ६ वार्तिकम् ।

षष्ठीनिर्दिष्टग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? षष्ठी स्थानेयोगा [ १ । १ । ४६ ] इति ।

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'नापवादे उत्सर्गकृतं भवतीति यदयं श्यन्नादीन्कांश्चिच्छितः करोति । श्यन् श्नम् श्ना शः श्नुरिति ।

**तस्य दोषस्तयादेश उभयेप्रतिषेधः ॥ १८ ॥**

तस्यैतस्य लक्षणस्य दोषः तयादेश उभयेप्रतिषेधो वक्तव्यः+ । उभये देवमनुष्याः । तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति × ।

नैष दोषः । अयच् प्रत्ययान्तरम् । यदि प्रत्ययान्तरम्, 'उभयी'ति ईकारो न प्राप्नोति । मा भूदेवम् । 'मात्रच' इत्येवं भविष्यति* । कथम् ? 'मात्र'जिति नेदं प्रत्ययग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क्व सन्निविष्टानां प्रत्याहारः ? मात्रशब्दात्प्रभृति आ अयचश्चकारात्† । यदि प्रत्याहारग्रहणं, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति । 'अत' इति वर्तते‡ । एवमपि 'तैलमात्रा घृतमात्रा अत्रापि प्राप्नोति ।

---

प्र०—ऽभावः । यदयमिति । न च पित्त्वनिवृत्त्यर्थं नियमार्थं शित्वम् । श्यनो नित्त्वाज्ज्ञापकात्पित्त्वनिवृत्तेः सिद्धत्वात् । नह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः । तदयुक्तम् । ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्वमाश्रीयते—अपवादे उत्सर्गकृतं न भवतीति ।

कति तिष्ठन्तीति । परिहारान्तरसद्भावान्न षट्संख्याविभ्य इति प्रतिषेधोऽत्र नोक्तः । तैलमात्रेति । चकारस्य प्रत्याहारार्थस्योपादानात्तस्याऽविशेषकत्वान्मात्रशब्दमात्रग्रहणप्रसङ्गः ।

---

उ०—नात्–करणात् । यत्र तर्हि स्यान्यनुमानं तत्र कथमत आह–विश्रवणेति । प्रत्ययविषयम्–शिवाद्यविषयम् । बालवेति । वैदूर्यस्य विदूरान्न प्रभवः किंतु वालवायादिति विदूराञ्ञ्य इत्यस्याऽसङ्गतौ इदं वार्त्तिकम् । वालवायो विदूरमापद्यतेऽथास्मात्प्रत्ययः । यद्वा बालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः । ननु विश्रवणादेरनादेशत्वे विश्रवः—शब्दादपि प्रत्ययः स्यादत आह—विश्रव इति । विशेषोऽस्तीति । नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय । स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्यनुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः । आद्युदात्तार्थमिति । इष्टमपि चित्त्वप्रयुक्तान्तोदात्तत्वं बाधित्वेत्यर्थः । अन्यत्र विकरणेभ्य इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः । किंच बाहुलु इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः । कैयटस्वरसस्तु तस्य धातोदिवादावभाव एवेति बोध्यम् । इष्टसिद्धये इति । वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाऽभावान्नित्त्वसामर्थ्यादन्यत्र विकरणेभ्य इत्युपदेशबाधकल्पनापेक्षया स्थानिवद्भिर्यातिदेशबाधकल्पनस्यैवौचित्याच्चेति भावः । सामान्येनेति । न विकरणविषयमेव, नापि पित्त्वविषयमेवेत्यर्थः । भाष्ये श्यन्नादीनिति उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम् ।

---

\+ ५ । २ । ४४ × १ । १ । ३३ १—'मात्रच्' इति पाठान्तरम् ।

* ४ । १ । १५ † ५ । २ । ३७—४३ ‡ ४ । १ । ४ एवं सति टिड्ढाणञ्सूत्रे तयपो विग्रहणं स्पष्टार्थमेव बोध्यम् ।

सदृशस्याऽप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् ।

**जात्याख्यायां वचनातिदेशे स्थानिवद्भावप्रतिषेधः ॥ १९ ॥**

जात्याख्यायां वचनातिदेशे+ स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः । व्रीहिभ्य आगत इत्यत्र 'घेर्ङिति' [ ७ । ३ । १११ ] इति गुणः प्राप्नोति ।

नैष दोषः । उक्तमेतत् 'अर्थातिदेशात्सिद्धम्' × इति ।

**ङ्याब्ग्रहणेऽदीर्घः ॥ २० ॥**

ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् । किं प्रयोजनम् ? निष्कौशाम्बिः, अतिखट्वः । ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति** । ननु च दीर्घादित्युच्यते । तत्र वक्तव्यं भवति । किं पुनरत्र ज्यायः ? स्थानिवत्प्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति—अतिखट्वाय अतिमालाय । 'याडापः'

---

प्र०—सदृशस्येति । प्रत्ययाऽनुकरणं मात्रशब्द इति प्रातिपदिकस्याऽग्रहणमित्यर्थः ।

जात्याख्यायामिति । एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः ।

---

उ०—**प्रत्ययानुकरणमिति** । टिड्ढाणञ्सूत्रे साहचर्यादिति भावः ।

नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह—**एकस्मिन्निति** ।

भाष्ये—**अर्थातीति** । बहुवचनशब्दो न प्रत्ययपरः, किंत्वर्थपर इति भावः ।

**'ङ्याब्ग्रहणेऽदीर्घ'** इति भाष्ये । ननु गङ्गाया इगङ्गः, गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु,सुलोपश्चास्त्विति वाच्यम् । आकारेकारप्रश्लेषमादायैतत्प्रत्याख्यानपरभाष्यविरोधात । सूत्रमतेऽपि नात्र लोपः, प्रत्यासत्त्या ङ्याप्पदोपस्थितेकाराऽकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषामनभिधानात् । नचेदं विशेषणं व्यर्थम्, खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाऽभावादिति वाच्यम् । न 'स्थानिव'दित्यस्य स्थानिकार्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेप्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तत् । **'ह्रस्व'** इति नोक्तम्, चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तेः । मम तु लुकोपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् । **अतिखट्व इति** । नचात्र ह्रस्व आकारस्येति तद्गतमाप्त्वमल्विधिरिति वाच्यम् । **गोस्त्रियोरित्यस्य** स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । **अचश्चेति** तु नोपतिष्ठते, अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाङीत्यादिविशिष्टनिष्ठमिति न दोषः । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव 'गोटाङ्ग्रहणं कर्तव्य'मिति वार्तिककृतोक्तम् । स्वरितत्वबलात् 'स्त्रिया'मिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानं चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् । **अतिखट्वायेति** । न चाबन्तादकारपरस्य याडिति तदर्थः । उपसर्ज-

---

+ १ । २ । ५८ × १ । २ । ५८ सूत्रे ३ वार्तिकम् । ** १ । २ । ४८, ६ । १ । ६८

[ ७ । ३ । ११३ ] इति याडन भवति । अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते† पिब्बासौ भूतपूर्व इति कृत्वा याडाप इति याट् कस्मान्न भवति ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम् । नेत्याह । न हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् ।

तर्त्तर्हि वक्तव्यम् ? न वक्तव्यम् । प्रश्लिष्टनिर्देशात्सिद्धम् । प्रश्लिष्टनिर्देशोऽयम् ङी–ई ईकारान्तात्, आ–आप् आकारान्तादिति ।

**आहिभुवोरीट्प्रतिषेधः ॥ २१ ॥**

आहिभुवोरीटः प्रतिषेधो वक्तव्यः । आत्थ अभूत्‡ अस्तिब्रूग्रहणेन ग्रहणादीट् प्राप्नोति+ ।

प्र०—भूतपूर्व इति । अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणात्, आ इति च रूपसद्भावात् । लक्षणेति । अत्र चाऽन्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ।

उ०—नन्वीप्रत्यये च तदादिनियमादेतदङ्गमाबन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरिति वाच्यम्, प्रत्ययग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्गविशेषणे आबन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवातिखट्वायामित्यादौ याट्सिद्धिरिति भावः । नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, अयं निषेधस्तु न, दीर्घत्वादत आह—अत्रचेति । एवं च स्थानिवद्भावेन तदलाभः, तत्स्थानिन्यसत्त्वादिति भावः । भाष्ये—ननुचेदानीमिति । वार्त्तिकाऽकरणे इत्यर्थः । सत्यपीति । निष्कौशाम्बिरित्यादौ । प्रश्लिष्टनिर्देशादिति । अतिखट्वाग्रे इत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । खट्वायै इत्यादौ तु न दोषो, यतो लक्षणप्रवृत्तिं विना यद्रूपाऽसंभवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः । अयं च प्रश्लेषो 'याडापः' 'आङि चापः' 'औङ आपः' 'ङेराम्नद्याप्', 'हल्ङ्याब्' इत्येतेषु । 'ह्रस्वनद्याप' इत्यत्र तु प्रश्लेषे न मानमिति दिक् । ननु भाष्यमते सूत्रमते च अतिखट्वस्य आ अतिखट्वा इत्यत्र सुलोपो भवति । वार्त्तिकमते तु न, अतिखट्वे आबन्तत्वस्य विच्छेदादग्रे प्ररोहाऽसंभवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावात् । यद्वा स्थानिवद्भावस्य कार्यार्थत्वेनाऽतिखट्वाशब्दे आकारप्रश्लेषे फलाऽभावात्तदप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः, परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् । यत्तु वार्तिकमते लोपाऽप्राप्त्या भाष्यादिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाऽभाव एव वाच्यः । एकप्रश्लेषेणैवातिखट्वव्यावृत्तौ ङ्यापोः दीर्घग्रहणं सूत्रमते भाष्यमते तत्प्रत्याख्यानाय कृतश्लेषान्तरं च नियमार्थम्—न कदाचिद्रूपान्तरं प्राप्तौ यौ ङ्यापाविति । एवं च न दोष इति । तन्न । मानाऽभावात् । किंच अतिखट्वादेरेव वार्तिकप्रयोजनं प्रदर्श्याकारप्रश्लेषेण हि तत्प्रत्याख्यातं भाष्ये ।

भाष्ये—आहिभुवोरिति । 'ब्रुव ईट्' 'अस्तिसिचोऽपृक्ते' इत्याभ्यां प्राप्तः ।

† सुपि च ७ । ३ । १०२ ‡ ३ । ४ । ८४; २ । ४ । ५२ + ७ । ३ । ९३; ९६

आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति नाहेरीड् भवतीति । यदयम्—'आहस्थः' [ ८ । २ । ३५ ] इति झलादिप्रकरणे थत्वं शास्ति । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? भूतपूर्वगतिर्यथा विज्ञायेत, झलादिर्यो भूतपूर्व इति । यद्येवं थवचनमनर्थकं स्यात् । आथिमेवायमुच्चारयेत्—'ब्रुवः पञ्चानामादित आथो ब्रुवः' इति । भवतेश्चापि न वक्तव्यः । 'अस्तिसिचोऽपृक्ते' [ ७ । ३ । ९६ ] इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति ।

## वध्यादेशे वृद्धितत्वप्रतिषेधः ॥ २२ ॥

वध्यादेशे वृद्धितत्वयोः प्रतिषेधो वक्तव्यः । वधकं पुष्करमिति ×। स्थानिवद्भावादवृद्धितत्वे प्राप्नुतः* ।

नैष दोषः । उक्तमेतत्—'नायं ण्वुल्, अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा† ।

## इड्विधिश्च ॥ २३ ॥

इड्विधेयः । आवधिषीष्ट‡ । 'एकाच उपदेशेऽनुदात्तात्' [ ७ । २ । १० ] इति प्रतिषेधः प्राप्नोति ।

---

**प्र०—झलादिरिति** । णलादिषु थलेव भूतपूर्वो झलादिरिति भावः । **आथिमिति** । तिबादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः ।

---

उ०—**द्विसकारको निर्देश इति** । **अस्तिस्सिच** इति सूत्रपाठ इति भावः । प्रकारान्तरे तु आदेशैरपहारात् सद्वयोच्चारणाऽभावेन निर्देश इति भाष्याऽस्वारस्यम् । अत एव वार्त्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः । सकारस्य सिज्विशेषणत्वमित्याशयेन तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः । भाष्यकृता तु मध्यमणिन्यायेनोभयसंबन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् ।

**नायं ण्वुलिति** । यद्यपि वृद्धिर्वधस्यादन्तत्वेनापि वारयितुं शक्या, तथापि तत्वाशप्रत्याख्यानायेदमावश्यकमिति भावः ।

**इड्विधिश्चेति** । यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । **इड्विधेय** इत्यस्य 'तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारे'ति शेषः । **आवधिषीष्टेति** । **आङो यमहन** इत्यात्मनेपदम् । **प्रतिषेधः प्राप्नोतीति** । तत्र वधेः स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इण्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाऽभावान्नेत्यर्थः । वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् ।

---

× २ । ४ । ५४ सूत्रस्थे १२ वार्तिके । * ७ । २ । ११६; ७ । ३ । ३२

† अस्यैव सूत्रस्याऽष्टमवार्तिकस्य व्याख्यान्ते द्रष्टव्यम् । ‡ २ । ४ । ४२

नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधत एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्टेति । नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते सतिशिष्टत्वात् प्रत्ययस्वरो भविष्यति ।

## आकारान्तान्नुक्षुक्प्रतिषेधः ॥ २४ ॥

आकारान्तान्नुक्षुकोः प्रतिषेधो वक्तव्यः । विलापयति भापयते+ । लीभीग्रहणेन ग्रहणान्नुक्षुकौ प्राप्नुतः × ।

[ नैष[1] दोषः ] लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् । लीभियोः प्रश्लिष्टनिर्देशोऽयम्—लीई ईकारान्तस्य, भीई ईकारान्तस्य चेति ।

## लोडादेशे शाभावजभावधित्वहिलोपैत्त्वप्रतिषेधः ॥ २५ ॥

लोडादेशे एषां प्रतिषेधो वक्तव्यः । शिष्टात् हतात् भिन्तात् कुरुतात् स्यात्* । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्वमित्येते विधयः प्राप्नुवन्ति† ।

---

प्र०—आवधिषीष्टेति । यदा यच्छब्दप्रयोगः यदावधिषीष्टेति [भवति, तदा] तिङ्ङतिङ इति निघातः प्राप्तो निपातैर्यद्यदीति प्रतिषिद्धस्तदैतदुदाहरणम् । क्वचित्तु 'यदावधिषीष्टे'ति पाठः ।

---

उ०—प्रकृतिस्वरस्य । प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य । प्रत्ययस्वरम्—तत्प्रयुक्तनिघातम् । नन्वत्रोदाहरणं तिङ्ङतिङ इति निघातेन भाव्यमत आह यदायदिति । यदेत्यस्य तदैतदुदाहरणमित्यनेनान्वयः । मध्ये भवति तदेत्यपाठः । भाष्ये आर्धधातुकसामान्ये इति । आर्धधातुक इतिवद्लिङीत्यादावपि विषयसप्तम्येवेति भावः । एवं चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाऽभावात् स्थानिवद्भावेनाङ्गत्वे सत्यपि निषेधाऽप्राप्त्या तन्निषेधो न कार्य इति तात्पर्यम् ।

आकारान्तादिति । विभाषा लीयतेः बिभेतेर्हेतुभये इत्यात्वम् । लीलोर्नुग्लुकाविति, भियोहेतुभये इति च नुक्—षुकौ ।

प्रश्लिष्टनिर्देशादिति । यद्यपि भिय इत्यत्र प्रश्लेषे एकादेशस्य कृदतिङ्सूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ्विधौ अचः परस्मिन्निति स्थानिवत्त्वेनेयङ् दुर्लभः, तथापि सौत्रत्वात्स इति बोध्यम् । 'भियो निष्ठायाम्' इति दीर्घविधाविवेति दिक् ।

शाभावेत्यादि । शाहौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः, उतश्च प्रत्ययात्, घ्वसोरेद्धावित्यैतैः । परत्वा-

---

+ ६ । १ । ५१; ५६ × ७ । ३ । ३९; ४० १—इदं क्वचिन्न ।
* ७ । १ । ३५ † ६ । ४ । ३५; ३६; १०१; १०६; ११९

नैष दोषः । इदमिह संप्रधार्यम्—लोडादेशः क्रियताम्, एते विधय इति किमत्र कर्तव्यम् ? परत्वाल्लोडादेशः । अथेदानीं लोडादेशे कृते पुनः प्रसङ्गविज्ञानात्कस्मादेते विधयो न भवन्ति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति कृत्वा ।

**त्रयादेशे स्रन्तप्रतिषेधः ॥ २६ ॥**

त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः । 'तिसृणाम्' । तिसृभावे कृते‡ 'त्रेस्त्रयः' [ ७ । १ । ५३ ] इति त्रयादेशः प्राप्नोति ।

नैष दोषः । इदमिह संप्रधार्यम्—तिसृभावः क्रियतां त्रयादेश इति किमत्र कर्तव्यम् ? परत्वात्तिसृभावः । अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानात्त्रयादेशः कस्मान्न भवति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ।

**आम्विधौ च ॥ २७ ॥**

आम्विधौ च स्रन्तस्य प्रतिषेधो वक्तव्यः । 'चतस्रस्तिष्ठन्ति' । चतसृभावे कृते‡ 'चतुरनडुहोरामुदात्तः' [ ७ । १ । ९८ ] इत्याम्प्राप्नोति ।

नैष दोषः । इदमिह संप्रधार्यम्—चतसृभावः क्रियताम् 'चतुरनडुहोरामुदात्तः' इत्यामिति किमत्र कर्तव्यम् ? परत्वाच्चतसृभावः । अथेदानीं चतसृभावे कृते पुनःप्रसङ्गविज्ञानादाम्कस्मान्न भवति ? 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवे'ति ।

**स्वरे वस्वादेशे ॥ २८ ॥**

स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः । विदुषः पश्य+ । 'शतुरनुमो नद्यजादी अन्तोदात्ता'दित्येष स्वरः प्राप्नोति × ।

---

उ०—दिति । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याऽभावरूपाऽसंभवस्य सत्त्वात् । तादृशाऽसंभव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरम्, न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति भावः । एवमग्रेऽपि ।

**परत्वात्तिसृभाव इति** । नच लिङ्गविशेषविभक्तिसंज्ञापेक्षतिसृभावापेक्षया प्रत्ययविशेषापेक्षस्याप्यन्तरङ्गत्वात्त्रयादेशापत्तिः । किंच स्वरूपेणोपादाने विशेषापेक्षत्वकृतबहिरङ्गत्व नेत्यर्थस्य पादः पदिति सूत्रे भाष्ये ध्वनितत्वेन सर्वथा त्रयादेशस्यान्तरङ्गत्वमिति वाच्यम् । अर्थसंज्ञाकृतबहिरङ्गस्य शास्त्रेऽनाश्रयणात् । एतेन 'चतस्र' इत्यपि व्याख्यातमिति दिक् ।

**विदुष इत्यत्र विदेः शतुर्वसुरिति शत्रादेशो वसुः । शतुरनुम इत्यादि** । अनुम्यः शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्तेत्यर्थः ।

---

‡ ७ । २ । ९९ + ७ । १ । ३६ × ६ । १ । १७३

नैष दोषः । 'अनुमः' इति प्रतिषेधो भविष्यति । 'अनुम' इत्युच्यते, न चात्र नुमं पश्यामः । अनुम इति नेदमागमग्रहणम् । किं तर्हि ? प्रत्याहारग्रहणम् । क सन्निविष्टानां प्रत्याहारः ? उकारात्प्रभृत्या नुमो मकारात्* । यदि प्रत्याहारग्रहणं लुनता पुनता अत्रापि प्राप्नोति† । अनुम्ग्रहणेन न शत्रन्तं विशेष्यते । किं तर्हि ? शतैव विशेष्यते—शता योऽनुम्क इति । अवश्यं चैतदेवं विज्ञेयम् । आगमग्रहणे हि सतीह प्रसज्येत—मुञ्चता मुञ्चत इति‡ ।

**गोः पूर्वणित्त्वात्वस्वरेषु ॥ २६ ॥**

गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रम् शबलग्वग्रम्+ । 'सर्वत्र विभाषा गोः' [ ६ । १ । १२२ ] इति विभाषा पूर्वत्वं प्राप्नोति ।

नैष दोषः । एङ इति वर्तते × । तत्रानल्विधाविति प्रतिषेधो भविष्यति ।

---

प्र०—**उकारात्प्रभृतीति** । **तनादिकृञ्भ्य** उरित्यतः । तत्र च वसुरन्तर्भूतः । **यदीति** । श्नाप्रत्ययस्य प्रत्याहारेऽन्तर्भावात् । **शता य इति** । न चाऽत्र श्ना शतु कृत इत्यनुमेव शता । **मुञ्चतेति** । शत्रन्तस्य सनुम्कत्वादिति भावः । तस्मादागमग्रहणेऽपि शतैव विशेषणीय इति प्रत्याहारग्रहणेपि स एव विशेष्यत इत्यदोषः ।

**सर्वत्रेति** । प्रकृतिभावोऽनेन विधीयते, न तु पूर्वत्वम् । तस्मादेङः **पदान्तादती**ति पूर्वत्वं प्राप्नोतीति वाच्यम् । यदाऽ त्वप्रकृतिभावः, तदाऽय प्रसङ्ग उक्तः । उत्तरं त्वल्विधित्वा-

---

उ०—**यदि प्रत्याहारेति** । उपहितशक्तेत्यर्थ इत्यभिमानः । भाष्ये **अनुम्क इति** । वसोरपि व्यपदेशिवद्भावेनोम्वत्त्वम् । **आगमग्रहणे हीति** । हिरप्यर्थे । तद्ग्रहणेऽपीत्यर्थः । कैयटे—**अनुमेव शतेति** । यद्यपि शतापि प्रत्याहारान्तर्गतस्तथापि सामर्थ्यात्तद्भिन्नस्यैव प्रत्याहारान्तर्गतस्य ग्रहणमिति भावः । व्यापकत्वात्प्राधान्याच्च **तनादी**त्युकारेण प्रत्याहार इति तात्पर्यम् ।

भाष्ये **विभाषा पूर्वत्वं प्राप्नोतीति** । अत्र वार्त्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते । भाष्ये—**सर्वत्रेति चाऽवङिति** सूत्रस्याप्युपलक्षणम् । ध्वनितं चेदमवङ्सूत्रे भाष्ये इति षष्ठे निरूपयिष्यामः । **अनन्तरस्येति** न्यायेन तदपवादोऽपि परत्वाद्यणमपि बाधित्वा स्यादित्याशयः । यत्तु कैयटेन—**तस्मादेङ** इत्यादिप्रसङ्ग उक्त इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव । **एङः पदान्तादि**ति सूत्रे एङ्पदोच्चारणसत्त्वेन शङ्कया असंभवदुक्तिकत्वात् । भाष्योक्ते तु एङ्पदाऽभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात् ।

भाष्ये—**एवमपीति** । लाक्षणिकत्वादस्य गोशब्दस्य स्वतः प्रकृतिभावाऽप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः । यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तते, तदेदं वचनं न कार्यम् । एङो लाक्षणिकत्वात् । तदंशे स्थानिवत्त्वानपेक्षणेनाऽतिदेशविषये तद-

---

* 'तनादिकृञ्भ्य उः' ३ । १ । ७९. इत्यारभ्य 'इदितो नुम् धातोः ७ । १ । ५८ इति यावत् ।

† ३ । १ । ८१ ‡ ७ । १ । ५६ + १ । २ । ३८ × ६ । १ । १०६

एवमपि 'हे चित्रगो अग्रम्' अत्र प्राप्नोति ।

णित्त्वम्—चित्रगुः चित्रगू चित्रगवः 'गोतो णित्' [ ७ । १ । ९० ] इति णित्त्वं प्राप्नोति ।

आत्वम्—चित्रगुं पश्य, शबलगुं पश्य । 'आ-ओतः'[1] इत्यात्वं प्राप्नोति* ।

नैष दोषः । तपरकरणात्सिद्धम् । तपरकरणसामर्थ्यात् णित्वात्वे न भविष्यतः।

स्वर—बहुगुमान् । 'न गोश्वन्सावबर्ण' [ ६ । १ । १८२ ] इति प्रतिषेधः प्राप्नोति ।

**करोतिपिब्योः[2] प्रतिषेधः ॥ ३० ॥**

करोतिपिब्योः[2] प्रतिषेधो वक्तव्यः । कुरु पिबेति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति† ।

**उक्तं वा ॥ ३१ ॥**

किमुक्तम् ? 'करोतौ तपरकरणनिर्देशात्सिद्धम्' । 'पिबिरदन्तः'‡ इति ॥५६॥

## अचः परस्मिन् पूर्वविधौ ॥ १ । १ । ५७ ॥

अच इति किमर्थम् ? प्रश्नो विश्नः । द्यूत्वा स्यूत्वा । आक्राष्टाम् । आगत्य ।

---

प्र०—त्स्थानिवत्त्वाऽभावः ॥ ५६ ॥

**अचः परस्मिन्** । अल्विध्यर्थमिदम् । तथा हि—त्वन्नश्चेति उरदत्त्वे कृते 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः स्थान्यलाश्रयः । एवमचितीक सुचिनीक. बहुचितीक इति 'चितेः कपी'ति दीर्घे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्व'मिति स्थान्यलाश्रयः स्वरोऽस्माद्वचनाद्भवति । वार्त्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्न.—**अच इति**

---

उ०—प्रवृत्तिरित्यपि नेत्याहुः ।

भाष्ये—**तपरकरणसामर्थ्या**दिति । एवं च गस्याविवक्षितत्वेनाल्विधित्वात्स्थानिवत्त्वाऽभाव इति भावः ॥ ५६ ॥

**अचःपर** । पूर्वेणैव सिद्धे इदं किमर्थमत आह—**अल्विति** । **उरदत्त्वे इति** । 'अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके' इति शेषः । **लिटयभ्यासस्येत्युभयेषां** ग्रहणाद्धलादिः शेषात्प्राक् संप्रसारणे वस्य संप्रसारणात्तन्निषेधाच्च प्राङ् नित्यत्वात्परत्वाच्चोरदत्त्वमिति भावः । **एवमचितीति** । उत्तरपदस्याऽधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे **लब्धे ह्रस्वान्ते** इत्यत्रान्तग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् । तन्न । तदभावे ह्रस्वादावित्यर्थापत्तेः । **ह्रस्वान्ते** इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि **बहोर्नञ्वदि**ति वचनाद्बहुचितीक

---

१—'आ गोतः' इति पाठः शिवदत्तदाधिमथानुमतः । * ६ । १ । ९३

२—'पिबत्योः' पाठान्तरम् । † ६ । ४ । ११०; ७ । ३ । ७८; ८६

‡ अस्यैव सूत्रस्याष्टमवार्तिकस्य व्याख्याने द्रष्टव्यम् ।

प्रश्नो विश्न इत्यत्र छकारस्य शकारः+ परनिमित्तकस्तस्य स्थानिवद्भावा'च्छे च' [ ६ । १ । ७३ ] इति तुक् प्राप्नोति । 'अच' इति वचनान्न भवति । नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि वा अज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति ।

इदं तर्हि प्रयोजनम्—द्यूत्वा स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवभावद्वादचीति यणादेशो × न प्राप्नोति । अच इति वचनाद्भवति । एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्राऽच्त्वं भविष्यति । अथवा योऽत्रादेशो नाऽसावाश्री-

प्र०—किमर्थमिति । अन्तरङ्गत्वादिति । अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारक इति वृद्धियणादेशयो, यथा च किरतः किरन्तीति यणित्त्वयोस्तत्रैतदुपतिष्ठते । तत्रायं यत्न—च्छ्वोः शूडिति तकारच्छकारयोः समुदायनिर्देशात्सतुक्छकारः स्थानी, समुदायनिर्देशसामर्थ्याच्चालोऽन्त्यस्येत्यस्यानुपस्थानमनर्थकत्वाद्वा । एवं च नङो ङित्करणं विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति ।

स्वाश्रयमिति । न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते यथा 'ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्य'मिति क्षत्रियस्य क्षत्रियधर्माः । वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वाद्यणोऽसिद्धत्वाद्वलिलोपाऽभावः । द्यूत्वेत्यत्र तु 'नाजानन्तर्य' इति असिद्धत्वनिषेधाद्यण् प्रवर्तते । ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत्, 'योऽनादिष्टादच' इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात् । योऽत्रादेश इति । समुदायरूप ऊठ् । यश्चाश्रीयत इति ।

उ०—इत्युदाहृतम् । प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता न तु भाष्यकृतोऽत आह—वार्त्तानीति । वृत्त्युदाहृतानि । भाष्ये–शकारः–च्छ्वोः शूडिति विहितः । अत एवेति । प्रत्ययनिरपेक्षतयाऽन्तरङ्गत्वेन तुकः शादेशात्प्राक् प्रवर्त्तनादेवेत्यर्थः । अत्राऽन्तरङ्गत्वं प्रथमप्रवृत्तिकत्वरूपम् । युगपदिति । बलाऽबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव संभवादिति भावः । यथेति । कारकः किरतीत्यादौ अन्तरङ्गत्वात्पूर्वमकादेशविकरणाविति भावः । सतुगिति । यद्यप्यकृतव्यूहपरिभाषया तुग्व्यावृत्तिः कर्त्तुं शक्या, तथापि तदभावस्यापि सतुङ्निर्देशो ज्ञापकः । न च वाञ्छतेः क्विपि वाञ्छावित्यादौ शाऽभावाय सतुक्निर्देश इति वाच्यम्, शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाऽभावात् । अत एव सतुङ्निर्देशसामर्थ्यात्सर्वादेशः श इति षाष्ठभाष्योक्तं सङ्गच्छते । ननु सतुक्निर्देशेऽपि तेनाङ्गविशेषणात्तदन्तविधौ अलोऽन्त्यस्येत्यस्यैव स्यादत आह–समुदायेति । अनर्थकत्वादिति । नानर्थक इति निषेधादिति भावः । सतुक्छनिर्देश लिङ्गमाह—एवं चेति ।

नहीति । अयोगवाहेषु हल्त्वाऽच्त्वयोः समावेशदर्शनेन तयोरविरोध इति भावः । ननु स्वाश्रयाऽनिवृत्तौ वाय्वोरित्यत्र दोषोऽत आह—वाय्वोरितीति । असिद्धत्वनिषेधादिति । 'ऊठ' इति शेषः । बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये । योऽनादिष्टादच इति अज्ग्रहणस्यसिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम् । स्थापयिष्यमाणत्वादिति । व्याख्यास्यमानत्वादित्यर्थः । अत्र स्वाश्रयकार्योऽभावातिदेशस्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम्—अथवा योऽत्रेति । अयं भावः—अभावातिदेशेऽपि

+ ६ । ४ । १९ × ६ । ४ । १९; ६ । १ । ७७

यते, यश्चाश्रीयते नाऽसावादेशः ।

इदं तर्हि प्रयोजनम्—आक्राष्टाम् । सिचो लोपः* परनिमित्तकः । तस्य स्थानिवद्भावात्—'षढोः कः सि' [ ८ । २ । ४१ ] इति कत्वं प्राप्नोति । 'अच' इति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—'पूर्वत्रासिद्धे न स्थानिव'दिति† ।

इदं तर्हि प्रयोजनम्—आगत्य अभिगत्य । अनुनासिकलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद्ध्रस्वस्येति तुङ् न प्राप्नोति‡ । 'अच' इति वचनाद्भवति ।

अथ परस्मिन्निति किमर्थम् ? युवजानिः वधूजानिः । द्विपदिका । वैयाघ्रपद्यः । आदीध्ये ।

युवजानिः वधूजानिरिति—'जायाया निङ्' [ ५ । ४ । १३४ ] न परनिमित्तकः । तस्य स्थानिवद्भावा'द्वली'ति यल्लोपो+ न प्राप्नोति । 'परस्मि'न्निति वचनाद्भवति । नैतदस्ति प्रयोजनम् । स्वाश्रयमत्र वलत्वं भविष्यति । अथवा योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः ।

---

प्र०—यण्विधावच् । **नासावादेश इति** । समुदायस्यादेशत्वात् । न चादेशाऽवयव आदेशो गृह्यते । मुख्यसंभवे गौणग्रहणस्याऽयुक्तत्वात् । स्याप्रादीनां तदनुबन्धवियुक्तानां धातुसंज्ञा आदेशावयवत्वान्न प्राप्नोति । घस्लादेशस्य लृदित्त्वादङर्थज्ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः ।

**युवजानिरिति** । अव्युत्पन्नत्वाद्गणादीनां जाशब्दस्याऽऽकारलोपो न भवति । अन्यथाऽऽकारस्य निङि कृते यलोपे च निङः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । न चाऽसिद्धवदत्राभादित्याकारलोपे कर्तव्येऽसिद्धत्वमात्वस्य, व्याश्रयत्वात् ।

---

उ०—स्थानिप्रयुक्तं भवत्यादेशप्रयुक्तं नेत्यर्थ इति । तदाह—**समुदायेति** । यथा सूत्रे सानुबन्धकग्रहणे तस्याऽनल्विधित्वम्, स्थानित्वं च नाऽलः, तथा आदेशत्वमपि सूत्रोपात्तस्यैवेति भावः । एवं च यण् नादेशप्रयुक्तः, किंतु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम् । **आदेशो गृह्यत इति** । आदेश इति गृह्यते इत्यर्थः । **न प्राप्नोतीति** । 'स्थानिवत्त्वेने'ति शेषः ।

भाष्ये—**आगत्येति** । मलोपस्यापि ह्रस्वस्य पित्प्रत्ययपरत्वसंपादकतया तुग्विधावाश्रयणमित्यर्थः । अभावातिदेशे चैतत्फलम् । अतएवाऽभावातिदेशे पटयतीत्यादौ वृद्धिर्नेत्यग्रे भाष्यं संगच्छते ।

ननु स्वाश्रयवल्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह—**अव्युत्पन्नत्वादिति** । **आकारलोप इति** । 'आतो लोप' इत्यनेन । जनेरौणादिके यकि 'ये विभाषे'त्यात्वे टापि तेनैकादेशे तस्य पूर्वान्तवद्भावादार्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ निङादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्धधातुकत्वादिसत्त्वाद्'याति'तिरितिवदिति भावः । ननु आभीयत्वेनात्वस्याऽसिद्धत्वाल्लोपो नेत्यत आह—**नचेति** । **व्याश्रयत्वादिति** । ये आत्त्वम्, आस्थानिके निङि लोप इत्यात्त्वनिमित्तापेक्षया न्यूननिमित्तकत्वाद्व्याश्रयता ।

---

* ८ । २ । २६ † १ । १ । ५८ वा. ३ । ‡ ६ । ४ । ३८; ६ । १ । ७१ + ६ । १ । ६६

शोऽयम्—द्विर्वचनं च द्विर्वचनश्च द्विर्वचनम् । द्विर्वचने च कर्तव्ये द्विर्वचनेऽचिप्रत्यय इति, द्विर्वचननिमित्तेऽचि स्थानिवद्भवति ।

**द्विर्वचननिमित्तेऽचि स्थानिवदिति चेदणौ स्थानिवद्वचनम् ॥ ७ ॥**

द्विर्वचननिमित्तेऽचि स्थानिवदिति चेदणौ स्थानिवद्भावो वक्तव्यः । अवनुनावयिषति अवचुत्तावयिषति । न वक्तव्यः ।

**ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥ ८ ॥**

यदयम्—'ओः पुयण्ज्यपरे' [ ७ । ४ । ८० ] इत्याह, तज्ज्ञापयत्याचार्यो

---

प्र०—त्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विर्वचनाऽभावः । अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते ।

**ओः पुयण्जिष्विति** । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभवति । 'पिपविषते' 'यियविषती' त्यत्रैवानेन स्थानिवद्भावात् । तत्र पु इति वर्गग्रहणाद्यणिति प्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते । ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु निनवनीयिषति दिदवनीयिषतीत्यादावपि । नैतदस्ति । 'येन नाव्यवधान'मित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव

---

उ०—तनुवे'तिवदिति भावः । क्रमेण बोधादत्रावृत्तिर्वोद्धारं प्रति, उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकम्, न तु साक्षादेवेत्याग्रहः । तद्भावभाविताप्रमात्रेण निमित्तत्वस्येहाऽङ्गीकारात् । अत एव चक्रतुरित्युदाहरणसङ्गतिः ।

स्वोक्तसर्वेष्वित्यस्य, **पुयण्जिष्विति** भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह—**पिपविषत इति** । **अनेन**—द्विर्वचनेऽचीत्यनेन । न चात्रोत्तरखण्डे जातयोरचोरचः परस्मिन्निति स्थानिवत्त्वेनाऽवर्णपरत्वाऽभावात्कथमोः पुयण्वित्यस्य प्राप्तिरिति वाच्यम् । एतत्सूत्रारम्भसामर्थ्येनैव तदप्रवृत्तेः । स्मिपूङिति सनीवन्तेति चोभयत्रेट् । नन्ववर्णपरपुयण्जयो णौ प्रत्ययान्तरे च संभवन्ति तत्कथं णावित्युक्तमित्याशङ्कते—**नन्विति** । **येन नेति** । प्रकृतसूत्रे परस्मिन्निति वर्तते । तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाऽव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः । तत्रानेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते । तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणाऽसंभवेन येन नाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्तिः । स च णिरेव संभवतीति भावः । न चोरुऋजुअम्बुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभाव उरुरविषतीत्यादावित्वार्थं वर्गादिग्रहणं चरितार्थम् । किंच भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि बिभविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति वाच्यम् । 'सनिग्रहे'त्यत्रोपदेशाधिकाराभावस्य 'एकाच उपदेश' इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषामनभिधानाच्च । विचोऽसार्वत्रिकत्वाच्च । एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम् । भाष्ये **णौ स्थानिवदिति** । अत्र णाविति प्रत्ययग्रहणे 'यस्माद्विहितस्तदादे'रित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः । यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिः । अत एव 'ह्रस्वस्य पिती'त्यादौ न तदुपस्थि-

भवति णौ स्थानिवदिति ।

यद्येतज्ज्ञाप्यते 'अचिकीर्तत्' अत्रापि प्राप्नोति । तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? यथाजातीयकाः पुयण्जयः । कथं जातीयकाश्चैते ? अवर्णपराः ।

कथं जग्ले मग्ले ? अनैमित्तिकमात्वम्, शिति तु प्रतिषेधः ।

कानि पुनरस्य योगस्य प्रयोजनानि ? पपतुः पपुः, तस्थतुः तस्थुः, जग्मतुः जग्मुः, आटिटत् आशिशत् । चक्रतुश्चक्रुरिति । आल्लोपोपधालोपणिलोपयणादेशेषु† कृतेष्वनच्कत्वाद्द्विर्वचनं न प्राप्नोति‡ स्थानिवद्भावाद्भवति ।

नैतानि सन्ति प्रयोजनानि । पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि । कथम् ? वक्ष्यति ह्याचार्यः–द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः'

---

प्र०—केवलस्य व्यवधायकस्य संभवात् ।

**कानि पुनरिति** । अन्यथा सिद्धत्वात्प्रश्नः ।

**पूर्वविप्रतिषेधेनापीति** । अपूर्वो वाचनिकः पूर्वविप्रतिषेधः । न हि नित्यानामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः । अथ निन्यतुरिति कथं, नह्यत्रेयङ् परिगणितः । एवं तर्हि 'प्रकल्प्य चापवादविषय'मिति न्यायाद्यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति

---

उ०—तिरित्युच्यते तर्हि मास्तु । णौ पर इत्यर्थे रेफेण व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम् । ज्ञापनफलं—तुतावयिषतीत्यादि ।

**तुल्यजातीयस्येति** । प्वादिघटितधात्वच्तुल्यस्याऽच आदेश इत्यर्थः । षष्ठ्यन्तस्य षष्ठ्यन्ताऽच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम् । अच्त्वेन तुल्यत्वं कर्तुरपीति पृच्छति–**कश्चेति** । उत्तरयति–**यथाजातीयका इति** । प्वादिघटितधात्वच इत्यर्थः । प्वादिभिरचस्तुल्यत्वासंभवात् । **अवर्णपरा इति** । अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः । एवं चाऽवर्णपरत्वसंपादकादेशस्थानित्वेन तुल्यतेति भावः । एवं चौननत् औजढदित्यादि चिन्त्यमेव । किंच यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रेदमिति 'द्विर्वचनेऽची'त्यादौ भाष्यकैयटयोः स्थितिमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः ।

**अनैमित्तिकमात्वमिति** । अत एव 'ह्वावामश्चे'ति ह्वेञः कबाधनार्थं पुनरण्विधानं चरितार्थमिति पर्युदासपक्षेऽप्यदोषमादेच इत्यत्र भाष्यकारो वक्ष्यति ।

**अनच्कत्वादिति** । आटिटदित्यत्र णिलोपे धातोर्द्वितीयस्याऽग्रहितत्वादित्यर्थो बोध्यः ।

**पूर्वविप्रतिषेधेनाप्येतानीति** । द्विर्वचनेऽचीति सूत्रसाध्यानि, णौ स्थानिवदिति ज्ञापकसाध्यानि चेत्यर्थः । **न हि नित्यानामिति** । आल्लोपादीनामित्यर्थः । द्विर्वचनेऽचीत्यादेरभावे द्विर्वचनमनित्यम् । भाष्ये–**वक्ष्यति हीति** । दाश्वान्साह्वानिति सूत्रे । **यणात्र भाव्यमिति** । यदीयङ् न स्यात् तर्हि स स्यादिति तत्सम्भावनासत्त्वादित्यर्थः । जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः । वस्तुतोऽत्र यणादिग्रहणं अच्स्थानिकस्य

---

† ६ । ४ । ६४; ६८; ५१; ६ । १ । ७७ ‡ ६ । १ । १; २

इति+ । स पूर्वविप्रतिषेधो न पठितव्यो भवति ।

किं पुनरत्र ज्यायः ? स्थानिवद्भाव एव ज्यायान् । पूर्वविप्रतिषेधे हि सतीदं वक्तव्यं स्यात्—'ओदौदादेशस्य उद्भवति चुटुतुशरादेरभ्यासस्ये'ति । ननु च त्वयाऽपीत्त्वं वक्तव्यम् × । परार्थं मम भविष्यति 'सन्यत इद्भवती'ति* । ममापि

---

प्र०—द्विर्वचने कृते 'एरनेकाच' इति यणा सिद्धम् ।

ओदौदादेशस्येति । ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्योकारादेशो भवतीत्यर्थः । यथा चुक्षावयिषति ऊर्णुनावयिषति नुनावयिषति तुतावयिषति पुस्फारयिषति । अत्र चिस्फुरोर्णावित्योकारस्यात्त्वम् । अत्र च यद्यपि खयः शेषे कृते अभ्यासस्य शरादित्वं नास्ति, तथाप्यभ्याससंज्ञाप्रवृत्तिसमयेऽस्ति । एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्त्वं विधीयते । ननु च त्वयापीति । ओः पुयण्जिष्विति ज्ञापनार्थमवश्यं वाच्यमित्यर्थः । उत्त्ववादी तु ओः पुयण्जीति न पठति, सन्यत

---

उ०—द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम् । सूत्रारम्भवादी आह—सपूर्वविप्रतिषेध इति ।

उभयोः समतया तृतीयः पृच्छति—किं पुनरिति । स्थानिवद्भाव एव ज्यायानिति । अयं भावः—अयं पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्यः, बिभवनीयिषतीत्यद्यसिद्ध्यापत्तेः । किन्त्विष्टाऽनिष्टविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क सूत्रमतापेक्षया लाघवमिति । अन्ये दूषणमाह—ओदौदादेशस्येति । अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः । स्थानिवत्त्वं त्वल्विधित्वान्नेत्यत आह—ओदौतोरादेशो यस्मिन्निति । इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न बिभवनीयिषतीत्यादौ दोषः । अत्र सनीत्यंशोऽपि पूरणीयः । अन्यथा दिदवनीयिषतीत्यादौ अनेनोत्वापत्तिः । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः । एकणिज्व्यवधानं तु 'येन नाव्यवधान' न्यायेन सह्यत एव । नन्विदं वचनं जोः सौत्रापिणिचि चङि सनि वाऽजीजवत्—जिजावयिषतीत्यादौ अतिव्याप्तम् । न च चकार एव पाठ्यः । गुङ्घुङ्भ्यां णिचि चङि सनि वाऽजूगवदित्यादौ दोषापत्तेरिति चेन्न, जोनं इत्यस्यापि वाच्यत्वात् । ओदौतोः किम्' ? चिखादयिषति । ण्वित्यादि किम् ? बिभावयिषतीत्यादि । यद्यपि च्छोश्छिदनं चिच्छासति इत्यत्रैवातिप्रसक्तम्, तथापि औत्साहचर्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औदादेशसाहचर्यादवेव गृह्यत इति न दोषः । ऊर्णुनावयिषतीति । यद्यपि 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याऽनित्यतया नुशब्दस्यैव द्वित्वेनाऽभ्याससंज्ञाप्रवृत्तिकाले दवादित्वाभावः, तथाऽपि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्ये कर्तव्ये पूर्वत्रासिद्धीयस्याऽसिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाऽभावाच्चैतत्प्रवृत्तिकाले दवादित्वमस्त्येवेति बोध्यम् । अभ्याससंज्ञा प्रवृत्तिसमये इति । एवं चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः । तत्राऽन्त्योदाहरणं चुक्षावयिषतीत्यादि । नहि तत्राद्यकाले तत्त्वं, 'क्षु' इति कवर्गादित्वादित्याहुः । ननु णेर्द्वित्वनिमित्तात्त्वाऽभावेन स्थानिवत्त्वाऽभावाद्बिभावयिषतीत्यादि सिद्धमिति त्वयाऽपीत्त्वमयुक्तमत आह—ओःप्विति । चुक्षावयिषतीत्यादिसिध्यर्थमित्यर्थः । परार्थमित्यत्र परशब्देन ज्ञापकापेक्षया

---

+ ६ । १ । १२ वा० ६ × ओः पुयण्ज्यपरे ७ । ४ । ८० * ७ । ४ । ७९

तर्ह्युत्त्वं परार्थं भविष्यति 'उत्परस्यातस्ति च' [ ७ । ४ । ८८; ८९ ] इति । इत्त्वमपि त्वया वक्तव्यम् । यत्समानाश्रयं तदर्थम्—उत्पिपविषते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् ॥ ५९ ॥

**इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य**
**प्रथमे पादेऽष्टममाह्निकम् ॥ ८ ॥**

---

प्र०—इतीत्त्वस्य सिद्धत्वात् । **परार्थमिति** । इत्त्वार्थम् । प्रसङ्गात्तु ज्ञापकम् । त्वया त्वपूर्वमुत्त्वं वक्तव्यमित्यर्थः । **ममापीति** । उत्त्वमप्यन्यार्थं वक्तव्यम् । तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्राय न्यासः 'उत्परस्यात.' 'ति च' 'ओदौदादेशस्य चुटुतुशरादे.' इति । अभ्यासस्येति वर्तते ।

**इत्त्वमपीति** । यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात् । पवतेयौतेश्च सनि 'स्मिपूङ्रञ्ज्वशां सनि' 'सनीवन्तर्धे'ति चेटि कृते परत्वाद्गुण । पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्त्वं वक्तव्यम् । तथा जिजावयिषतीत्यत्रेत्त्वविधानार्थं वक्तव्यम् । तस्मादिति । नन्वसत्यस्मिन् सूत्रे ओः पुयण्जीति ज्ञापकमेवं समर्थयिष्यते—अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिपिध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति । तदयुक्तम् । यदि सामान्येन ज्ञापकमाश्रीयते—अचिकीर्तदित्यत्रापि पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः । अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते, यथोक्तं भाष्यकारेण, तथा सति चक्रतुरित्यादि न सिध्यतीति सूत्रमेव कर्तव्यम् । यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः ॥ ५९ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य
प्रथमे पादेऽष्टममाह्निकम् ॥ ८ ॥

---

उ०—परमित्त्वं विवक्षितमित्याह—**इत्त्वार्थमिति** । **द्विर्वचनेऽचीति** स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः । **प्रसङ्गादिति** । वर्गप्रत्याहारजग्रहादित्यर्थः । **सन्यत इत्त्वतीति** । 'विहितमित्त्वमिहानुवर्तमानं परार्थं भविष्यती'ति भाष्येऽन्वयः । तत्र 'सन्यत' इत्यभिधानं स्वरूपेणोत्त्वमपूर्वं न भवतीति प्रदर्शनार्थं, तद्ध्वनयन्नाह—**अपूर्वमुत्त्वमिति** । अपूर्वत्वतदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः—**ममापि तह्युत्त्वमिति** तद्व्याचष्टे—**उत्त्वमपीति** ।

नापूर्वत्वतदभावमात्रेण वैषम्यमभिप्रेतम्, किंतु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये—**इत्त्वमपीति** । तदुपपादयति—**यत्रेति** । 'गुणायादेशयो'रिति शेषः । **वक्तव्यमिति** । 'जोर्ने'ति वक्तव्यमित्यर्थः । **नन्वसतीति** । असत्यपीत्यर्थः । **यदीति** । लघुपरत्वाऽभावेन सन्वत्त्वाभावोऽचिकीर्त्तदित्यत्र दोषः, दिदवनीयिषतीत्यादावपि दोषो बोध्यः । **अथ तुल्येति** । अवर्णपरत्वं अत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा, तत्र द्विर्वचनेनाऽन्तरङ्गनित्ये बाध्येते इत्यर्थः । **चक्रतुरिति** । दिदवनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥ ५९ ॥

**इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य**
**प्रथमे पादेऽष्टममाह्निकम् ॥ ८ ॥**

# अथ नवममाह्निकम्

## अदर्शनं लोपः ॥ १ । १ । ६० ॥

अर्थस्य संज्ञा कर्तव्या, शब्दस्य मा भूदिति । इतरेतराश्रयं च भवति । का इतरेतराश्रयता ? सतोऽदर्शनस्य संज्ञया भवितव्यम्, संज्ञया चाऽदर्शनं भाव्यते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ।

**लोपसंज्ञायामर्थसतोरुक्तम् ॥ १ ॥**

किमुक्तम् ? अर्थस्य तावदुक्तम्—'इतिकरणोऽर्थनिर्देशार्थः' इति† । सतोऽप्युक्तम्—'सिद्धं तु नित्यशब्दत्वात्' इति‡ । नित्याः शब्दाः । नित्येषु च शब्देषु सतोऽदर्शनस्य संज्ञा क्रियते, न संज्ञयाऽदर्शनं भाव्यते ।

**सर्वप्रसङ्गस्तु सर्वस्यान्यत्राऽदृष्टत्वात् ॥ २ ॥**

सर्वप्रसङ्गस्तु भवति । सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति । किं कारणम् ? 'सर्वस्यान्यत्रादृष्टत्वात्' । सर्वो हि शब्दो यो यस्य प्रयोगविषयः स ततोऽन्यत्र न

---

प्र०—अदर्शनं लोपः । अर्थस्येति । 'स्वं रूप'मिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः । इतरेतराश्रयमिति । विधिप्रदेशेष्वेतद्बोध्यम्, नाऽनुवादे—चादिलोपे विभाषेत्यादौ ।

† इतिकरण इति । इहापि स एवानुवर्तते । लोप इत्यन्वर्थसंज्ञाविज्ञानाद्वाऽर्थस्य संज्ञा, न शब्दस्य ।

सर्वप्रसङ्गस्त्विति । यदि स्वभावतोऽप्रयुक्तस्याऽन्वाख्यानमात्रं क्रियते, तदा सर्वस्य

---

उ०—अदर्शनं लोपः । नन्वस्त्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवाऽर्थस्य संज्ञेत्यत आह स्वंरूपमिति । नानुवादे इति । तत्र हि न संज्ञाकृतोऽभावः इत्यर्थः ।

भाष्ये—उक्तमिति । नवेति विभाषेत्यत्रेत्यर्थः । असंबद्धपदव्यवायान्ननुवृत्तिरत आह—लोप इतीति । तदर्थान्वययोग्यताया अर्थ एव सत्त्वाददर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाऽभाव इति भावः । प्रसक्ताऽदर्शनस्येत्यर्थलाभार्थं स्थानेपदस्यैवास्याप्यनुवृत्तिः सुलभा । लुप्लृच्छेदन इति धात्वर्थानुसारेणान्वर्थत्वाऽसंभवादिति तु भाष्यतात्पर्यम् । अभावो लोप इत्यवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाऽभाव एवात्रेति बोध्यम् । स्वंरूपमित्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम् ।

नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह—यदीति ।

---

† १ । १ । ४४ वा० ३ ‡ १ । १ । १ वा० ६

दृश्यते । त्रपु जतु इत्यत्राणोऽदर्शनम् । तत्र 'अदर्शनं लोप'इति लोपसंज्ञा प्राप्नोति । तत्र को दोषः ?

**तत्र प्रत्ययलक्षणप्रतिषेधः ॥ ३ ॥**

तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति । तस्य प्रतिषेधो वक्तव्यः । 'अचो ञ्णिति' [ ७ । २ । ११५ ] इति वृद्धिः प्राप्नोति ।

नैष दोषः । ञ्णित्यङ्गस्याचो वृद्धिरुच्यते । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति† । यस्माच्चात्र प्रत्ययविधिर्न तत्प्रत्यये परतो, यच्च प्रत्यये परतो न तस्मात्प्रत्ययविधिः ।

क्विपस्तर्ह्यदर्शनम् । तत्र 'अदर्शनं लोपः' इति लोपसंज्ञा प्राप्नोति । तत्र को दोषः ? 'तत्र प्रत्ययलक्षणप्रतिषेधः' । तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । 'ह्रस्वस्य पिति कृति तुग्भवती'ति तुक् प्राप्नोति‡ ।

**सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् । यदि 'प्रसक्तादर्शनं लोपसंज्ञं भवती'त्युच्यते ग्रामणीः सेनानीः——अत्र वृद्धिः प्राप्नोति+ ।

---

प्र०—स्वविषयादन्यत्राऽप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः ।

ञ्णित्यङ्गस्येति । अङ्गसंज्ञा च विधानप्रतिबद्धा । न चात्र प्रत्ययस्य णितो विधानम् । **यस्माच्चेति** । त्रपुशब्दात्सोर्विधानम् । **नतत्प्रत्यय इति** । ञ्णिति वृद्धिनिमित्त इत्यर्थः । **यच्चेति** । सुशब्दे । **न तस्मादिति** । तस्मात्त्रपुशब्दात्सोरन्यस्याऽणो विधानं नास्तीत्यर्थः ।

अनाङ्गं कार्यं चोदयति—**क्विप इति** । त्रपु इत्यत्र क्विपोऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः ।

**सिद्धं त्विति** । शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति । **स्थाने**ग्रहणमिहाप्यनुवर्तते । **स्थानं** च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते । **ग्रामणीरिति** । अर्थोपपदधातु-

---

उ०—अत्र प्रत्ययो नाऽणित्याह–**सोरिति** । **ञ्णिति वृद्धिनिमित्ते इति** । अङ्गसंज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणाद्वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताऽङ्गग्रहणाच्चेति भावः ।

**चादिलोप** इति सङ्ग्रहायाह—**अर्थाद्वेति** । **एकवचनमुत्सर्गं** इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् । ननु कथं प्रसक्तस्येति लभ्यतेऽत आह—**स्थाने इति** । न च पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेपे—आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किंचानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा पीन-

---

† १ । ४ । १३ ‡ ६ । १ । ७१ + कर्मण्यण् ३ । २ । १; अचो ञ्णिति ७ । २ । ११५

प्रसक्ताऽदर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य । यदि षष्ठीनिर्दिष्टस्येत्युच्यते 'चाह-लोप एवेत्यवधारणम्' [ ८ । १ । ६२ ] 'चादिलोपे विभाषा' [ ६३ ] इत्यत्र लोपसंज्ञा न प्राप्नोति । अथ 'प्रसक्ताऽदर्शनं लोपसंज्ञं भवती'त्युच्यमाने कथमेवैतत्सिद्ध्यति ? को हि शब्दस्य प्रसङ्गः ? यत्र गम्यते चार्थो, न च प्रयुज्यते । अस्तु तर्हि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्येव । कथं ग्रामणीः सेनानीः ? योऽत्राऽणः प्रसङ्गः क्विपाऽसौ बाध्यते × ॥ ६० ॥

## प्रत्ययस्य लुक्श्लुलुपः ॥ १ । १ । ६१ ॥

प्रत्ययग्रहणं किमर्थम् ?

प्र०—संनिधानादर्थाच्छास्त्राच्चाऽणः प्रसङ्गोऽस्तीति भावः । **षष्ठीनिर्दिष्टस्येति** । षष्ठीग्रहणमप्यनुवर्तते । **चादिलोप इति** । ततश्च 'शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्ती'ति निघातविकल्पो न स्यात् । **अथेति** । अत्राऽपि चादीनां शास्त्रान्नास्ति प्रसङ्गः । **क्विपाऽसौ बाध्यत इति** । सत्सूद्विषेति क्विपो विधानादणोऽत्र प्रसङ्गाभाव ॥ ६० ॥

**प्रत्ययस्य** । **प्रत्ययग्रहणमिति** । लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते, क्वचिदनुवर्तते, कचित्सामर्थ्यात्प्रतीयत इति प्रश्नः ।

त्वेन रात्रिभोजनम् । न चैवं प्रकृते । न ह्येतत्सूत्रे आक्षेपं विना पित्कृत्प्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुपपत्तिः, नापि प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरित्युपस्थिति', अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किंचात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वे व्यभिचारात्तदाक्षेपाऽसंभव इति दिक् । यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थः ग्रामे तिष्ठतीति वाक्ये 'ल्यब्लोप' इति पञ्चम्यापत्तिवारणाय 'प्रसक्तस्ये'त्यावश्यकमिति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनाऽत्राऽप्राप्तेः । तत्त्वेऽस्त्विष्टापत्तिः पञ्चम्या इत्यलम् । **अर्थादिति** । कर्तृलक्षणादित्यर्थः । **शास्त्रात्कर्मण्यणित्यतः** । **अणः प्रसङ्ग इति** । 'यस्मात्प्रत्ययविधि'रित्यत्र विधिः प्रसङ्ग एव निर्दिष्ट इत्यङ्गत्वमस्तीत्यभिमानः । **षष्ठीग्रहणमिति** । तच्च षष्ठ्यन्त वैयधिकरण्येनाऽदर्शनान्वयीति बोध्यम् । **अत्रापीति** । शास्त्रतः प्रसक्तिरेवाभिमतेति चोद्यमिति भावः । अर्थतोऽपि प्रसक्तिर्गृह्यत इत्युत्तरम् । **अणोऽत्रेति** । 'परिहृत्य चापवादविषय'मिति न्यायेन प्रसङ्ग एव नास्तीति भावः ॥ ६० ॥

**प्रत्ययस्य** । ननु लुगादिविधौ प्रत्ययाऽदर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह—**लुगादीति** । **साक्षादिति** । 'लुगणिञो'रित्यादौ । **क्वचिदिति** । यथा 'लुग्वादुहे'त्यादौ क्सस्येति । **क्वचिदिति** । वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः ।

× सत्सूद्विषद्रुह० ३ । २ । ६१

## लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ॥ १ ॥

लुमति प्रत्ययग्रहणं क्रियते । अप्रत्ययस्यैताः संज्ञा मा भूवन्निति । किं प्रयोजनम् ?

## प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ॥२॥

तद्धितलुकि गोनिवृत्त्यर्थम् । कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम् । 'लुक्तद्धितलुकि' [ १ । २ । ४९ ] इति गोरपि लुक् प्राप्नोति† । प्रत्ययग्रहणान्न भवति । 'कंसीयपरशव्ययोर्यञञौ लुक् च' [ ४ । ३ । १६८ ] इति प्रकृतेरपि लुक् प्राप्नोति । प्रत्ययग्रहणान्न भवति ।

गोनिवृत्त्यर्थेन तावन्नार्थः ।

## योगविभागात्सिद्धम् ॥ ३ ॥

योगविभागः करिष्यते—'गोरुपसर्जनस्य' । गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य

---

प्र०—अप्रत्ययस्येति । अविद्यमानः प्रत्ययो यस्मिन्निदर्शने इति तदप्रत्ययम् ।

गोरपीति । पञ्चेन्द्र इत्यादौ तु 'निर्दिश्यमानस्यादेशा भवन्ती'ति वचनात् स्त्रीप्रत्ययस्यैव लुग्भविष्यति, न तदन्तस्य । 'गोरतद्धितलुकी'त्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाऽभावात्समासान्ताऽप्राप्तावतद्धितलुकीति प्रतिषेधोऽनर्थकः स्यादिति चेत्, कृते समासान्ते लुक्स्यादित्यर्थवानेव प्रतिषेधः । ननुस्वभावतोऽप्रवृत्तस्याऽदर्शनं लुक्संज्ञम् । न च तत्र गोशब्दस्य स्वभावतोऽप्रवृत्ति । नैष दोषः । शास्त्रानुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात् । प्रकृतेरपीति । समुदायस्य षष्ठीनिर्देशात् ।

योगविभागादिति । एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिरित्येतत्प्रकारान्तरेण प्रतिपाद्यते ।

---

उ०—नन्वदर्शनस्येमाः संज्ञा इति अप्रत्ययस्यैताः इत्यनुपपन्नमत आह—अविद्यमान इति । 'प्रतियोगिविशेषणत्वेने'ति शेषः । वस्तुतोऽवसानसंज्ञासूत्रे वक्ष्यमाणरीत्या प्रत्ययाऽभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः ।

भाष्ये—गोरपीति । 'गोस्त्रियो'रिति समुदायानुवृत्तेरिति भावः । ननु 'गोस्त्रियो'रित्यत्र स्त्रीति स्वरितमुच्चारणमुक्तमिति 'स्त्रिया'मित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तमत आह—पञ्चेन्द्र इति । गोनिवृत्तिः प्रत्ययग्रहणं विनापि सिध्यतीति शङ्कते—गोरिति । 'पञ्चगु'रित्यत्र क्रीतार्थठकोऽध्यर्धेति लुक् । कृते इति । परत्वादिति भावः । 'अन्तरङ्गानपी'ति न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषय इति तात्पर्यम् । न च समासान्ते तेन व्यवधानात्कथं लुक्, गोरित्यनुवृत्तिसामर्थ्येन लुक्प्राप्तेरिति बोध्यम् । नित्यशब्दान्वाख्यानाभिप्रायेण शङ्कते—नन्विति । समुदायस्येति । 'यस्येति चे'त्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः ।

ननु योगविभागे सूत्रभेदः कृतः स्यादत आह—एकयोगेति । प्रकारान्तरम्—योगविभागरूपम् ।

---

† गोस्त्रियोरुपसर्जनस्य १ । २ । ४८; लुक् तद्धितलुकि १ । २ । ४९

ह्रस्वो भवति। ततः 'स्त्रियाः'। स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति। ततो 'लुक्तद्धितलुकि' इति, स्त्रिया इति वर्तते, गोरिति निवृत्तम्।

## कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् ॥ ४ ॥

कंसीयपरशव्ययोरपि विशिष्टनिर्देशः कर्तव्यः। कंसीयपरशव्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति। सचावश्यं विशिष्टनिर्देशः कर्तव्यः। क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसकारशब्दयोर्मा[1] भूदिति। 'कमेः सः' कंसः‡। परान् शृणातीति परशुरिति। नैष दोषः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। स एषोऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः, प्रत्ययग्रहणं वा कर्तव्यम्।

## उक्तं वा ॥ ५ ॥

किमुक्तम्? 'ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थ'मिति ×।

---

प्र०—विशिष्टनिर्देशादिति। छयतावेवात्र निर्देष्टव्यावित्यर्थः। उणादय इति। 'अतः कृकमिकंसकुम्भे'ति कंसशब्दस्य भेदेनोपादानात्कचिदुणादयो. व्युत्पत्तिकार्यं न लभन्त इत्यर्थ.। यञञोस्तु विधानसामर्थ्याल्लुगभावः। स एषोऽनन्यार्थ इति। प्रकृतिनिवृत्त्यर्थ एव न तु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थ।

---

उ०—छयताविति। कंसात्—प्राक्क्रीताच्छः। परशोरुगवादिभ्यो यत्। कंसे 'कमेः सः'। परशौ—'आङ्परयोः खनिशृभ्यां डिच्चे'त्युप्रत्ययः।

अतः कृ इति। 'धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात्कमिग्रहणेनैव सिद्धे' इति शेषः। कंसेस्तु कंस इति न रूपम्। अनभिधानादिति भावः। अत एव 'कमेः सः कंस' इति भाष्ये उक्तम्। नन्वेवमपि विशिष्टनिर्देशाऽभावे यञञोरपि लुक् स्यादत आह—यञञोरिति। विकारावयवार्थप्रतीतये औत्सर्गिकाऽण एव लुकं विदध्यात्। न च यञञ्लुका सामर्थ्याद्विकल्पोऽस्तु। वेत्यनुक्तिस्तु यञञ्भ्या मुक्ते औत्सर्गिकाऽणः श्रवणाऽभावायेति वाच्यम्। यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावाऽसंभवात्। ट्युट्युलौ तुट् चेत्यादौ तु 'अनद्यतन' इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः। किं च 'कंसीयपरशव्ययो'रिति षष्ठीनिर्देशादपि न यञञोर्लुक्। अन्यथा पञ्चम्यैव निर्दिशेदिति भावः। प्रकृतीति। प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः। तेन नञः समासे प्रकृतिरुच्यत इत्याशयः।

भाष्ये—ङ्याबिति। प्रातिपदिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे उभयोः प्रातिपदिकात्परत्वाऽभावेन परिशेषात् कंसीयाद्यवयवप्रातिपदिकात्परयोः छयतोरेव लुगित्यर्थः।

---

१—'उकारमकारयोः' 'उकारसशब्दयोः' पा०। ‡ वृतृवदिवचिवसिहनिकमिकषिभ्यः सः (उणादि० ३ पा० ६२ सू०) × ४।१।१ वा० २

## षष्ठीनिर्देशार्थं तु ॥ ६ ॥

षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । षष्ठीनिर्देशो यथा प्रकल्पेत ।

## अनिर्देशे हि षष्ठ्यर्थाऽप्रसिद्धिः ॥ ७ ॥

अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याऽप्रसिद्धिः स्यात् । कस्य ? स्थानेयोगत्वस्य। क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः प्रत्ययग्रहणेन । यावता सर्वत्रैव षष्ठ्युच्चार्यते—अणिञोः, तद्राजस्य, यञञोः, शप इति+ ? इह न काचित् षष्ठी 'जनपदे लुप्' [ ४ । २ । ८१ ] इति । अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्तते । क्व प्रकृतम् ? 'प्रत्ययः, परश्च' [ ३ । १ । १; २ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । 'ङ्याप्प्रातिपदिकात्'[ ४ । १ । १ ] इत्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' [ १ । १ । ६७ ] इति । प्रत्ययविधिरयं, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति । नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ।

## सर्वादेशार्थं वा वचनप्रामाण्यात् ॥ ८ ॥

सर्वादेशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । लुक्श्लुलुपः सर्वादेशा यथा स्युः । अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः ? 'वचन-

---

प्र०—षष्ठीनिर्देशार्थं त्विति । विशिष्टस्य षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः । असति प्रत्ययस्येत्येतस्मिन्य कश्चिदानन्तर्यादिः संबन्धः स्यात् । ततश्च 'जनपदे लु'बिति 'पञ्चालाः शोभना' इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात् ।

सर्वादेशार्थं वेति । षष्ठीनिर्देशार्थत्वं तु स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्त ।'आगस्त्यकौण्डिन्ययो'रित्यत्र हि यदि लुगनुवर्तते, तदैकैकस्य त्रय आदेशाः स्युः । अथ नानुवर्त्तते, द्वावेवादेशौ विधीयेते । तदागस्त्यादेशेन सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति, अवृद्धत्वात्प्रकृते. । प्रत्ययस्येति तूच्यमाने 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे

---

उ०—विशिष्टेति । जनपदार्थकप्रत्ययसम्बन्धिन इत्यर्थः । 'शोभनाः पञ्चाला इत्यादौ' इति पाठ उचितः । अनन्तरस्येति ।·अव्यवहितस्येत्यर्थः । जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भावः।

भाष्ये—प्रकृतमिति । अत एव लवणाल्लुगित्यत्र प्रकृतठक एव लुगिति बोध्यम् ।

वार्त्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति—आगस्त्येति । अथ इति । एवं च वैषम्याद्यथासङ्ख्याप्राप्तेरगस्तयोऽपि कुण्डिनाः, कुण्डिनाश्चागस्तयः स्युः, लुक्च ज्ञापकात्सर्वादेश इति विभक्तिमात्रं श्रूयेतेति भावः । द्वावेवेति । तेन नोक्तापत्तिरिति भाव । सर्वत्रेति । अजादिप्राग्दीव्यतीयविषयेऽपीति भावः ।

---

+ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २ । ४ । ५८; तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२; यञञोश्च २ । ४ । ६४; अदिप्रभृतिभ्यः शपः २ । ४ । ७२

प्रामाण्यात्' प्रत्ययग्रहणसामर्थ्यात् ।

एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति,'लुक्श्लुलुपः सर्वादेशा भवन्ती'ति यदयं' लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' [ ७ । ३ । ७३ ] इति लोपे प्रकृते लुकं शास्ति ।

## उत्तरार्थं तु ॥ ६ ॥

उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । न कर्त्तव्यम् क्रियते तत्रैव 'प्रत्ययलोपे

---

प्र०—संनियोगशिष्टत्वाल्लुगभावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति षष्ठीनिर्देशार्थप्रत्ययग्रहणम् । भाष्यकारस्तु तदर्थे वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्व नेच्छति । स ह्येवं मन्यते– 'आगस्त्यकौण्डिन्ययो'रित्यत्र 'यस्कादिभ्यो गोत्रे'इत्यतो गोत्रग्रहणमनुवर्तते, लुगिति च तेनागस्त्यकौण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक् । परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः । **अथ क्रियमाणेऽपीति** । 'अलोऽन्त्यस्ये'ति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः । **वचनप्रामाण्यादिति** । प्रत्ययस्येति वचनसामर्थ्यादलोऽन्त्यस्येति बाध्यते । 'वचन प्रामाण्या'दिति ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनभिप्रेतमेव, षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोऽन्त्यविधिर्बाध्यते ।

**यदयमिति** । विपर्ययस्तु न प्रकल्प्यते, अनुपसञ्जातविरोधित्वात् । लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यद्यन्त्यस्य स्यात्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात् । विहितं तु सर्वादेशत्वस्य ज्ञापकः संपद्यते ।

**द्वितीयमिति** । लोपविशेषणापेक्षया द्वितीयं, पाठापेक्षया तु तृतीयं भवति । **एकदेशलोप** इति । अवयवक्रिया समुदायेऽपि व्यपदिश्यते–यथा पटो दग्ध इति । अवयवे हि पटाख्योऽवयवी

---

उ०—**अवृद्धत्वादिति** । यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिद्धयति, तथाप्यवृद्धत्वात्प्रकृतेश्छस्य वृद्धयनिमित्तत्वाच्च आकारश्रवणं न स्यादिति भावः । संनियोगशिष्टत्वादगस्त्यादेशाऽभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः । **गोत्रेविहित इति** । नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणम्, नत्वनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिः स्यात् । शिवादिभ्य इत्यत्रैव गोत्र इति निवृत्तेः, ऋष्यणसाधारणः अगस्त्यप्रकृतिकऋष्यणन्त एवाऽत्राऽगस्त्यः, नत्वगस्तिप्रकृतिकगर्गादियञन्तः 'यञञोश्चे'ति लुका सिद्धत्वादिति चेन्न । कौण्डिन्यसाहचर्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणात् । भाष्यमते गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च । वस्तुतो वार्त्तिककारस्यापीत्थमेव संमतमित्याह—**प्रत्ययस्येतिवचनेति** ।

सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह—**विपर्यय इति** । न उपसंजातो विरोध वैयर्थ्यशङ्काद्भवो यस्य तत्त्वादित्यर्थः ।

**नत्वयमिति** । अयमवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न, किन्तु मुख्य एव, अवयवलोपे समुदायस्यापि लोपादित्यर्थः । **अनुनासिकेति** । अनुदात्तोपदेशेत्यनेन । आघ्नीतेत्यत्र आङो यमहन

प्रत्ययलक्षणम्' [ १ । १ । ६२ ] इति । द्वितीयं कर्तव्यम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति । 'आघ्नीत' 'संशयस्तोषेण ग्मीय' इति† ॥ ६१ ॥

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ १ । १ । ६२ ॥

प्रत्ययग्रहणं किमर्थम् ? 'लोपे प्रत्ययलक्षण'मितीयत्युच्यमाने सौरथी वैहतीति‡ गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत+ । नैष दोषः । नैवं विज्ञायते लोपे प्रत्ययलक्षणं

प्र०—समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणत्वे तथाहि सति मुख्यस्यैव संप्रत्ययान्न कर्तव्यमेव प्रत्ययग्रहणं स्यात् । आघ्नीतेति । परत्वादुपधालोपे कृते पुनःप्रसङ्गविज्ञानादनुनासिकलोपः स्यात् ॥ ६१ ॥

प्रत्ययलोपे । प्रत्ययग्रहणमिति । प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भाव. । सौरथीति । प्रत्ययस्य लक्षणं दर्शनं प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहृतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङ्भवति, एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति—प्रत्ययस्य लोपे तस्यैव पुन. प्रादुर्भाव इति । एवं हि लोपविधानमनर्थकं स्यात् । तस्मात्—प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते । नैवमिति । सन्देहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते । अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते—प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति । यथा ग्रामणीरिति क्विपो

उ०—इत्यात्मनेपदैकवचनम् । संग्मीयेति । गमेर्विधिलिङि समो गमीत्यात्मनेपदे इटि शपो बहुलं छन्दसीति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदं च प्रयोजनं अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिकमते बोध्यम् ॥ ६१ ॥

प्रत्ययलोपे । लक्षणशब्दार्थमाह—निमित्तमिति । कार्यमिति । बहुव्रीहिलभ्यम् । प्रत्यासत्त्येति । क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेति भावः । ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्यप्रापणयातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशेनाऽत आह—प्रत्ययस्य लक्षणमिति । यस्य लोपस्तस्मिन्सति यः प्रत्ययो भवति, तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थः । लाघवात्षष्ठीतत्पुरुष एव स्यादिति तात्पर्यम् । रमेः क्वनि हन्तेश्च क्ते अनुदात्तोपेत्यनुनासिकलोपेऽगुरूपोत्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः । एवं हि लोपेति । ननु योरनिटीत्यादिसामर्थ्यान्मा भूत्तत्र प्रवृत्तिः । यस्तु सामान्येन लोपे स्थानिवद्भवदिति, सोऽप्रत्ययविषये चरितार्थ इति भिन्नमाचक्षे भिन्नयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति नेन्न । एवं हि तत्रैव प्रत्ययस्य लोप इति

† लिङः सलोपोऽनन्त्यस्य ७ । २ । ७९ ‡ अनुदात्तोपदेश० ६ । ४ । ३७
+ अणिञोरना० ४ । १ । ७८

भवति—प्रत्ययस्य प्रादुर्भाव इति । कथं तर्हि ? प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवतीति ।

इदं तर्हि प्रयोजनम् । सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्यात् । लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणेन मा भूदिति । किं प्रयोजनम् ? ग्रामणिकुलं सेनानिकुलम् । औत्तरपदिके ह्रस्वत्वे कृते× 'ह्रस्वस्य पिति कृति तुक्' [ ६ । १ । ७१ ] इति तुक् प्राप्नोति, स मा भूदिति । यदि तर्हि यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति, लोपोत्तरकालं यत् प्राप्नोति तन्न भवति । जगत् जनगदित्यत्र* तुग्न प्राप्नोति लोपोत्तरकालं ह्यत्र तुगागमः । तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन ।

कस्मान्न भवति—ग्रामणिकुलं सेनानि कुलम् ? बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । 'असिद्धं बहिरङ्गमन्तरङ्गे' ।

प्र०—लोपेस्वाद्युत्पत्तिः । ततश्चाऽधोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः । लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः । अन्यथा लोपे प्रत्यय इत्येवं वक्तव्यं स्यात् ।

**सति प्रत्यय इति** । प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते । तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति । न च ग्रामणीरित्यत्र क्विपि सति तुग्दृष्टः, ह्रस्वाऽभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः । **जगदिति** । 'द्युतिगमिजुहोत्यादीनां द्वे चे'ति गमेः क्विप् । अत्राऽन्तरङ्गत्वात्पूर्वं विलोपः । **गमः क्वा**वित्ययं हि लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः । भिन्नविषयत्वाच्च 'येन नाप्राप्ति'न्यायो न भवति । सति त्वस्मिन्न्याये नैव विलोपः स्यात् । तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः । अपि तु विलोपे कृते ।

उ०—वदेत् । एवं च मुख्तरन्यासो ज्ञापक इति बोध्यम् । **अन्यथा**—व्याख्यानस्य शरणत्वाऽभावे । **पदसंज्ञा न स्यादिति** । तिङन्तत्वाऽभावादिति भावः । **लोपे प्रत्यय इति** । अस्य 'प्रादुर्भवती'ति शेषः ।

ननु 'प्रत्ययलोपे' इत्युक्ते कथं 'सति प्रत्यये' इति लभ्यतेऽत आह—**प्रत्ययशब्द इति** । **यत्कार्यमिति** । प्रत्ययलक्षणं यत्कार्यं दृष्टमित्यर्थः । ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं **गमः क्वा**वित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तेराह—**अत्रेति** । **भिन्नविषयत्वादिति** । वार्तिकमते एतत् । अचिरादेशे नुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तेरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् । वैयाख्यान्यायाङ्गीकारे दोषमाह—**सति त्विति** ।

× इको ह्रस्वोऽङ्यो० ६ । ३ । ६१ * अन्येभ्योऽपि दृश्यते ३ । २ । १७८; क्विप् च ३ । २ । ७६ गमः क्वौ ६ । ४ । ४०

**इदं तर्हि प्रयोजनम्—कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति । 'आघ्नीत' 'संरायस्पोषेण ग्मीय' । पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम् । अन्यतरच्छक्यमकर्तुम् ।**

**अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात् । वर्णलक्षणं मा भूदिति । गवे हितं गोहितम् । रायः कुलं रैकुलमिति† ।**

---

**प्र०—अन्यतरदिति** । एकमेव प्रत्ययग्रहणं सामर्थ्यात्कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् ।

**वर्णलक्षणमिति** । 'प्रत्ययलोपे तल्लक्षणं'मित्युच्यमाने प्रत्ययस्य यत्र कार्यो निमित्तभावः प्रत्ययत्वरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात् । सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम् । **रैकुलमिति** । अवयवद्वारेणात्र प्रत्ययस्याप्यादेशं प्रति निमित्तत्वमस्त्येव, प्रत्ययाश्रयस्त्वायादेशो न भवतीति न प्रवर्तते । अनेनैव न्यायेन 'न धातुलोप आर्धधातुके'इत्यत्र धिन्विकृण्व्योर्विचि 'लोपो व्योर्वली'ति वलोपस्य वल्निमित्तत्वादार्धधातुकनिमित्तत्वाऽभावाद्गुणप्रतिषेधो न भवति । तेन सुधे सुकरिति भवति, न तु सुधी सुकीरिति ।

---

**उ०—एकमेवेति** । अवयवस्य प्रत्ययत्वपार्याप्त्यधिकरणत्वाऽभावादिति भावः । एवं चानयोः फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम् ।

ननु द्वितीयप्रत्ययग्रहणाऽभावे बहुव्रीह्यलाभात्तल्लम्यकार्यातिदेशो न सिध्येदत आह—**तल्लक्षणमिति** । **वस्तुमात्रेति** । प्रत्ययमात्रेत्यर्थः । **प्रत्ययनिमित्तमेवेति** । प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः । **न वर्णेति** । प्राधान्येन वर्णनिमित्तमित्यर्थः । ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रय, किंतु तदवयवाश्रयोऽत आह—**अवयवद्वारेणेति** । केचित्तु प्रत्ययग्रहणमित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः । **प्रत्ययलोपेऽपीत्येव सूत्रं कार्यम्** । अस्य 'तद्भवति यत्प्रत्यये सती'ति शेषः । स्थानिवदित्यनुवृत्तिर्वा । **प्रत्ययलक्षणमिति** । प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः । **वर्णलक्षणं**—वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तम् । प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादिति भावः । **कैयटव्याख्या** तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरित्याहुः । **अनेनैवेति** । अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम् । 'आर्धधातुक' इत्यस्य कैयटरीत्या तोतोर्तीत्यादिव्यावृत्त्या चरितार्थत्वात् । 'पूर्वसूत्रे आर्धधातुकग्रहणमनवकाश'मिति क्ङितिचेति सूत्रस्थभाष्यविरोधाच्च । आवृत्त्यादिना तथार्थकल्पने तु न मानम् । किंच तथार्थकल्पने यक्यक्क्यत्रलोपे इति वार्त्तिकं तदुदाहरणपरं जीरदानुरिति भाष्यं चासङ्गतं स्यादिति चिन्त्यमेतत् । **सुधे इत्यादि** । धिविकृव्योर्नुमि विचि वलोपेऽपृक्तलोपे सुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे रूपे । गुणनिषेधे तु सुधिन्शब्दे 'इन्हनि'ति दीर्घः । सुकृणः 'सर्वनामस्थानेचे'ति दीर्घ उपधायाश्चेतीत्वे रपरत्वे सुनलोपयोर्वोरिति दीर्घः स्यादिति भावः ।

---

† सुपो धातुप्रातिपदिकयोः २ । ४ । ७१ ( ६ । १ । ७८ )

किमर्थं पुनरिदमुच्यते ?

**प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य ॥ १ ॥**

'प्रत्ययलोपे प्रत्ययलक्षण'मित्युच्यते 'सदन्वाख्यानाच्छास्त्रस्य'। सच्छास्त्रेणान्वाख्यायते, सतो वा शास्त्रमन्वाख्यायकं भवति। सदन्वाख्यानाच्छास्त्रस्य, 'उगिदचां सर्वनामस्थानेऽधातोः' [ ७ । १ । ७० ] इतीहैव स्यात्—गोमन्तौ यवमन्तौ, गोमान् यवमानित्यत्र न स्यात्‡। इष्यते च स्यादिति। तच्चान्तरेण यत्नं न सिध्यति, अतः प्रत्ययलोपे प्रत्ययलक्षणवचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत् ? किं तर्हीति।

**लुक्युपसंख्यानम् ॥ २ ॥**

लुक्युपसंख्यानं कर्तव्यम्। पञ्च सप्त × ॥ किं पुनः कारणं न सिध्यति ?

**लोपे हि विधानम् ॥ ३ ॥**

लोपे हि प्रत्ययलक्षणं विधीयते, तेन लुकि न प्राप्नोति।

---

प्र०—**किमर्थमिति**। स्थानिवद्भावेन सिद्धमिति भावः।

**सदन्वाख्यानादिति**। शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता। **सच्छास्त्रेणेति**। शास्त्रेण करणेनाचार्यः स्मर्ता सद्विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे। **सतो वेति**। शास्त्रस्यैवाऽवच्छेदेन प्रवर्तमानस्य स्वतन्त्रत्वमन्वाख्यान इति पूर्वस्माद्व्याख्यानादस्य विशेषः। न च स्थानिवद्भावेन सिध्यति, अतृणेडित्यादावल्विधित्वात्।

**लुक्युपसङ्ख्यानमिति**। 'तक्रकौण्डिन्य'न्यायेन लोपसंज्ञाया लुगादिसंज्ञाभिर्बाधनादिति भाव.। लुग्ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते।

---

उ०—**स्थानिवद्भावेनेति**। वर्णाश्रयस्य तवाप्यनिष्टत्वादित्यर्थः।

ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वेनोभयप्राप्ताविति नियमाच्छास्त्रस्येति षष्ठ्यनुपपन्ना, **कर्मणि चेति** समासनिषेधापत्तिश्च। करणत्वे तु षष्ठ्यनुपपन्नेत्यत आह—**शास्त्रमिति**। शेषत्वे चोभयप्राप्तावित्यस्याऽप्राप्तेः षष्ठीसमासो नानुपपन्न इति भावः। 'आचार्यःस्मर्ते'ति फलितार्थकथनम्। स्मर्त्राचार्येणेति स्वन्वाख्यायत इत्यन्वययोग्यम्। **स्वतन्त्रत्वमिति**। करणस्य कर्तृत्वविवक्षेति भावः। **अल्विधित्वादिति**। 'इमादे'रिति शेषः। **वर्णाश्रयेइति** तु वर्णप्राधान्यविषयकम्। एवं चाऽप्राधान्येनालाश्रयणे विध्यर्थं सूत्रमिति भावः। भाष्ये—**अस्तिप्रयोजनमेतदिति**। उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काका प्रश्न इति बोध्यम्। **किंतर्हीति**। मम तु निर्दोषमेव, तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्नगर्भमुत्तरम्।

**बाधनादिति**। एवं च पञ्चेत्यादौ पदत्वं न स्यादिति भावः। **उपलक्षणार्थत्वादिति**। तयोरपिपूर्वपक्षबीजस्य समत्वादिति भावः। तत्र श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यं, लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति।

---

‡ संयोगान्तस्य लोपः ८ । २ । २३ × षड्भ्यो लुक् ७ । १ । २२

**न वाऽदर्शनस्य लोपसंज्ञित्वात् ॥ ४ ॥**

न वा कर्तव्यम् । किं कारणम् ? 'अदर्शनस्य लोपसंज्ञित्वात्' । अदर्शनं लोपसंज्ञं भवतीत्युच्यते, लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते । तेन लुक्यपि भविष्यति । यद्येवम्—

**प्रत्ययादर्शनं तु लुमत्संज्ञम् ॥ ५ ॥**

प्रत्ययाऽदर्शनं तु लुमत्संज्ञमपि प्राप्नोति ।

तत्र को दोषः ?

**तत्र लुकि श्लुविधिः प्रतिषेधः ॥ ६ ॥**

तत्र लुकि श्लुविधिरपि प्राप्नोति स प्रतिषेध्यः । अत्ति हन्ति + । 'श्लौ' [ ६ । १ । १० ] इति द्विर्वचनं प्राप्नोति ।

**न वा पृथक्संज्ञाकरणात् ॥ ७ ॥**

न वैष दोषः । किं कारणम् ? 'पृथक्संज्ञाकरणात्' । पृथक्संज्ञाकरणसामर्थ्याल्लुकि

---

प्र०—**न वाऽदर्शनस्येति** । अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते । न च संज्ञानां बाध्यबाधकभावः, समावेशदर्शनात्तासामिति—कडारसूत्रे वक्ष्यते । लोपस्य संज्ञि लोपसंज्ञि, तस्य भावो लोपसंज्ञित्वं, तस्मादित्यर्थः ।

**प्रत्ययादर्शनं त्विति** । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः ।

**तत्र लुकि श्लुविधिरिति** । उपलक्षणं चैतत् । तेन श्लावपि लुग्विधिः प्राप्नोति—जुहोतीति । उतो वृद्धिर्लुकि हलीति । लुप्यपि लुग्विधिप्रसङ्गः—हरीतकीति । लुक् तद्धितलुकीति । तथा लुकि लुब्विधिः—लवणः सूप इति । युक्तवद्भावः स्यात् ।

**न वा पृथगिति** । एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते । तत्राश्रितस्वरूपव्यापारा वा लुगादय आश्रीयन्ते, आवृत्तिर्वा

---

उ०—**समावेशदर्शनादिति** । कृत्कृत्यादिष्विति भावः । लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिः । ण्यन्तेन षष्ठीसमासेऽर्थासङ्गतिरत इन्नन्तेन षष्ठीसमास इत्याह—**लोपस्येति** ।

**सङ्कर इति** । परस्परं लोपशब्दभावितप्रत्ययादर्शनविषये लोपसंज्ञया चेत्यर्थः । प्रत्ययादर्शनमात्रं सकललुमत्संज्ञं प्राप्नोतीति भाष्याक्षरार्थः ।

**उतो वृद्धिरिति** । न च तत्र नाभ्यस्तस्येति वर्त्तनाददोषः । अत्र पक्षे तदनुवृत्तेर्वक्तुमशक्यत्वात् । **हरीतकीति** । नन्वत्र सत्यपि ङीषो लुकि युक्तवद्भावात् पुनर्ङीष् स्यादिति चेन्न । 'लक्ष्ये लक्षणस्ये'ति न्यायादित्याहुः । **हरीतक्यां** हरीतक्यादिभ्यश्चेत्यणो लुप् । यद्वा हरीतकीवेयं प्रतिकृतिरिति कनो लुप् । **लवण** इत्यत्र लवणाल्लुक् ।

तद्भावितग्रहणे युक्तिमाह—**तत्राश्रितेति** । आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते तथोक्ता इत्यर्थः । अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञे युक्ते प्रत्यासत्त्या यया संज्ञया यद-

---

+ अदिप्रभृतिभ्यः शपः २ । ४ । ७२

श्लुविधिर्न भविष्यति ।

तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते । यथैव तर्हि अदर्शन सामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते, एवं लुमत्सञ्ज्ञा अपि लोपसंज्ञामवगाहेरन् । तत्र को दोषः ? अगोमती गोमती सम्पन्ना गोमतीभूता† । 'लुक्तद्धितलुकि' [ १ । २ । ४९ ] इति ङीपो लुक् प्रसज्येत । ननु चात्रापि 'नवा पृथक्संज्ञाकरणा'दित्येव सिद्धम् । यथैव तर्हि पृथक्संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते, एवं लोपसञ्ज्ञाऽपि लुमत्संज्ञा नावगाहेत । तत्र स एष दोषो—'लुक्युपसंख्यान'मिति । अस्त्यन्यल्लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनम् । किम् ? लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति ।

प्र०—लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति । विधिप्रदेशेषु चेतरेतराश्रयदोषानवतारो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा ।

**यथैवेति** । तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत् । लोपसंज्ञाविषये तु ताः प्रवर्तेरन् । **गोमतीभूतेति** । च्वेर्लोपे कृते लुक्संज्ञायां सत्यां लुक्तद्धितलुकीति लुक् प्राप्नोति । पुंवद्भावस्त्वत्र न भवति, वैयधिकरण्यात् । महद्भूता ब्राह्मणीत्यत्र तु भवति, सामानाधिकरण्यात् । नित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं, क्वचित्प्रकृतेः । **ननु चात्रापीति** । लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थ. । **अस्त्यन्यदिति** । प्रत्ययाप्रत्ययाऽदर्शनस्य लोपसंज्ञा यथा स्यादिति । **लोपमात्रे माभूदिति** । यथा गोमतीभूतेति च्वेर्लोपे कृते लुक्तद्धितलुकीति न भवति तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम् ।

उ०—दर्शनं भाव्यते तस्यैव सा संज्ञेति सा लभ्यत इति भावः । प्रत्यासत्ति सर्वैर्दुर्शयेत्यत आह—**आवृत्तिर्वेति** । तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्तत्संज्ञमित्यर्थः । अदर्शनस्य नित्यत्वेऽपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह—**भाविसंज्ञेति** ।

तद्भावितग्रहणपक्षे **यथैवे**त्यादिग्रन्थोऽनुपपन्न इत्यत आह- **तिसृणामिति** । इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः । **वैयधिकरण्यादिति** । भवनक्रियायां प्रकृतेः कर्तृत्वादिति भावः । **क्वचिद्विकारस्येति** । वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वम् । विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात्सामानाधिकरण्यम् । अत एव गौणत्वान्महच्छब्द आत्वाऽभावः । गोमतीशब्दे तु गोमतीनदी भिन्ना गोमतीनदीभूतेत्यर्थेनाऽभाषितपुंस्कत्वात् पुंवत्त्वाऽभाव इति बोध्यम् । भाष्ये—**एवं लोपेति** । लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् । अत्र सामर्थ्यात्तद्भावितग्रहणेऽपि लोपसंज्ञायां तद्ग्रहणे मानाऽभावः । न च लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं मानम्, तयाः प्रयोजनान्तरसत्त्वादित्याह—**अस्त्यन्यदिति** । तद्दर्शयति--**तल्लोपमात्र** इति भाष्ये । स्वयं प्रयोजनान्तरमप्याह—**प्रत्ययाप्रत्ययेति** ।

† अभूततद्भावे० ५ । ४ । ५०; वेरपृक्तस्य ६ । १ । ६७

## लुमति प्रतिषेधाद्वा ॥ ८ ॥

अथवा यदयं 'न लुमताङ्गस्य' [ १ । १ । ६३ ] इति [ प्रत्ययलक्षण ] प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवति लुकि प्रत्ययलक्षणमिति ।

## सतो निमित्ताऽभावात्पदसंज्ञाऽभावः ॥ ६ ॥

सन् प्रत्ययो येषां कार्याणामनिमित्तं‡ राज्ञः पुरुष इति, स लुप्तोX ऽप्यनिमित्तं स्यात्-राज पुरुष इति। अस्तु तस्या अनिमित्तं—या स्वादौ पदमिति+पद संज्ञा, या तु 'सुबन्तं पद' मिति* पदसंज्ञा सा भविष्यति । सत्येतत्प्रत्यय आसीत् अनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एवाऽवधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति† ।

---

प्र०—**सतो निमित्ताभावादिति**। निमित्तशब्देन निमित्तत्वमुच्यते। तेन यस्य सत कार्यं प्रति निमित्तत्वं नाऽभूत्स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः। **राज्ञ इति**। सति ङसि भसञ्ज्ञाया स्वादिष्विति पदसंज्ञा बाधितेति नलोपो नाऽभूदल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यादल्लोपश्च स्यात्। **अस्तु तस्या इति** । द्वे चाऽत्र पदसंज्ञे। एका स्वादिष्वित्यवयवस्य, सा च भसंज्ञया बाधिता। द्वितीया सुबन्तत्वेन समुदायस्य, सा च लुप्तेऽपि स्थितैव। अल्लोपस्तु न लुमताङ्गस्येति प्रतिषेधान्न भवति। **सत्येतदिति**। कालविप्रकर्षप्रतिपादनायाऽनद्यतनप्रत्ययप्रयोग । राज्ञ इत्यत्रावधिभेदाद्भसंज्ञयाऽवयवस्यैव पदसंज्ञा बाध्यते, न समुदायस्य सुबन्तत्वनिमित्ता। लुप्ते तु प्रत्ययेऽवधिभेदाऽभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये। एकाऽपवादत्वेन, द्वितीया परत्वेनेति भावः। **अनयेति**। पदसंज्ञाद्वयमनेन दर्शितम्। भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयाऽपि भवति। यथा अतृणेडितीमागमः।

---

उ०—भाष्ये **लुमतिप्रतिषेधाद्वेति**। भवतु लोपसंज्ञायामपि तद्भावितग्रहणं, न लुमतेति निषेधेन तत्र लोपत्वनिमित्तकार्यप्रवृत्तिर्ज्ञाप्यत इत्यदोष इति भावः।

'लुक्युपसङ्ख्यान'मिति दोषे परिहृते, दोषान्तरमाशङ्कते—**सतो निमित्तेति**। वार्तिकतद्व्याख्यानयोर्विरोधं परिहरति—**निमित्तशब्देनेति** । नन्वेवं पदत्वेऽपि भत्वस्याऽपि सत्त्वादल्लोपः स्यादत आह—**अल्लोपस्त्विति**। **कालविप्रकर्षेति**। अस्य चोत्तरस्य नायमवसर इत्यर्थः। भाष्ये—**एतत्**—वक्ष्यमाणवाक्यार्थरूपम्। **पदसंज्ञाद्वयमिति**। अनया पदसंज्ञया नलोपो भविष्यतीत्यादि भाष्यार्थः। **यथेति**। वर्णप्राधान्यविषय एव स निषेध इति भावः।

---

१ क्वचिन्न। ‡ नलोपः प्रातिपदिकान्तस्य ८।२।७ X सुपो धातु प्रातिपदिकयोः २।४।७१ + स्वादिष्वसर्वनामस्थाने १।४।१७ * सुप्तिङन्तं पदम् १।४।१४

† यचि भम् १।४।१८

**तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीरिति ॥१०॥**

तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते । क्व ? परिवीरिति‡ । किं कारणम् ? 'एकयोगलक्षणत्वात्' । एकयोगलक्षणे हि तुग्दीर्घत्वे । इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि भवन्ति, तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुग्, अनेनैव च दीर्घत्वमिति, तदेकयोगलक्षणं भवति । एकयोगलक्षणानि च न प्रकल्पन्ते ।

**सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ॥ ११ ॥**

सिद्धमेतत् । कथम् ? 'स्थानिसंज्ञाऽन्यभूतस्य भवती'ति वक्तव्यम् । किं कृतं भवति ? सत्तामात्रमनेन क्रियते । यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः ।

तद्वक्तव्यं भवति । यद्यप्येतदुच्यते, अथवैतर्हि स्थानिवद्भावो नारभ्यते, 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'विति वक्ष्यामि । यद्येवम् 'आङो यमहन आत्मनेपदं भव-

---

प्र०—**तुग्दीर्घत्वयोश्चेति** । अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेऽपि प्रत्यये विधीयन्ते इति क्रमाऽभावात्पौर्वापर्यं न प्रकल्प्यते । कार्यस्य प्राधान्यान्नाऽनेन शास्त्र-व्यपदेशौ विधीयेते ।

**सिद्धं त्विति** । अन्यो भावोऽन्यद्वस्तु, स्थान्यपेक्षयाऽऽदेशः । अन्यभाव एवाऽऽन्यभाव्यमिति स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः—पित् कृत्प्रत्यय इत्यादिः, स लोपस्याऽनेन विधीयते । ततस्तन्निबन्धनं शास्त्रं प्रवर्तत इति सिद्धो विप्रतिषेधः । **सत्तामात्रमिति** । कृदादिव्यपदेशस्येत्यर्थः ।

**यद्येवमिति** । हन्ति स्वरूपेणोपादायात्मनेपदं विधीयते न तु कांचित्संज्ञामाश्रित्येति भावः ।

---

उ०—भाष्ये—**पर्यवपन्नानि** । मृतानि । अप्राप्तानीति यावत् । नन्वेतत्कार्यातिदेशे स्यात्स एव कुतः ? शास्त्रनिमित्तातिदेशयोरपि संभवात् । अत आह—**कार्यस्येति** । **व्यपदेशो**—निमित्तम् । **विधीयेते इति** । 'इत्यभिमान' इति शेषः । वस्तुतः कार्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् । भाष्ये **एकयोगलक्षणानि चेति** । तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्पन्त **इत्यर्थः** ।

नन्वन्य**भाव** इति षष्ठीतत्पुरुषः कर्मधारयो वा, उभयत्रापि ष्यञनुपपन्नः, भावस्य भावान्तरेणाऽयोगात् । समाससंज्ञया गुणवचनसंज्ञाया बाधाच्चार्थाऽसङ्गतेश्चेत्यत आह **अन्यो भाव इति**, भाष्ये—अन्यरूपं प्राप्तस्येत्यर्थकम् । अन्यभूतस्येत्येतत्तु फलितार्थो बोध्यः । **स्वार्थे इति** । चातुर्वर्ण्यादित्वात् । ननु सत्तास्थानिनश्चेद्विरुद्धमतिदेशसहस्रेण सत्ताया अशक्यत्वाच्चाऽत आह—**कृदादिव्यपदेशस्येति** । एतदर्थमेव स्थानिसंज्ञानुदेशादित्युक्तं, न तु स्थान्यनुदेशादिति । तथा सति स्थानिकार्यातिदेश एव स्यादिति बोध्यम् ।

भाष्ये शङ्किता आह—**तद्वक्तव्यमिति** । वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः । परिहरति—**यद्यपीति** । **अथवैतर्हीति** । तथापीत्यर्थः । एवं च लघुतरत्वाद्वचनान्तरेणाऽपि परिहारो युक्त

---

‡ वचिस्वपियजादीनां किति ६ । १ । १५; हलः ६ । ४ । २

ती'ति+ हन्तेरेव स्याद्वधेर्न स्यात् । नहि काचिद्धन्तेः संज्ञास्ति या वधेरतिदिश्येत । हन्तेरपि संज्ञाऽस्ति । का ? हन्तिरेव । कथम् ? 'स्वं रूपं शब्दस्याशब्दसंज्ञा' [ १ । १ । ६८ ] इति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविती'ति ।

## भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम् ॥ १२ ॥

भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धं भवति ।

भसंज्ञा—राज्ञः पुरुषो राजपुरुषः । प्रत्ययलक्षणेन 'यचि भम्' [ १ । ४ । १८ ] इति भसंज्ञा प्राप्नोति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा' विति वचनान्न भवति ।

ङीप्—चित्रायां जाता चित्रा× । प्रत्ययलक्षणेनाऽणन्तादितीकारः प्राप्नोति* । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा' विति वचनान्न भवति ।

ष्फ—वतण्डी† । प्रत्ययलक्षणेन 'यञन्ता'दिति ष्फः प्राप्नोति‡ । 'स्थानिसंज्ञा

---

प्र०—नहीति । यद्यपि धातुसंज्ञाऽस्ति, तथापि न तदुपादानेनात्मनेपदं विधीयते । हन्तेरपीति । 'आङो यमहन' इति सूत्रोपात्तो हन्तिः संज्ञा, प्रयोगस्थस्तु संज्ञीति वधेरपि हन्तिसंज्ञाऽतिदिश्यते ।

चित्रायां जातेति । 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यान'मित्यणो लुक् । 'टिड्ढाण'-त्रित्यत्राऽत इत्यधिकारान्ङीपोऽल्विधित्वम् ।

वतण्डीति । यथा आवट्यायनीति चाप' बाधित्वा सर्वत्रग्रहणाऽपकर्षात् ष्फो भवति, एवं

---

उ०—इति भावः । संज्ञामिति । निमित्तभूतव्यपदेशमित्यर्थः । ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिसंज्ञेत्य-युक्तमत आह—सूत्रोपात्त इति ।

फलान्तरमपि वचनान्तरारम्भे दर्शयति भाष्ये—भेत्यादि । सिद्धमिति । 'इष्ट'मिति शेषः । वक्ष्यमा-णान्यल्विधित्वाद्वार्त्तिकमते नातिदेशेन भविष्यन्ति । सूत्रारम्भे तु 'वर्णाश्रये'इत्यस्य वर्णप्राधान्यविषयत्वादति-देशेन स्युरेवेति भावः ।

चित्रेति । 'नक्षत्रेण युक्त' इत्यणो 'लुबविशेषे' इति लुप् । युक्तवद्भावात्स्त्रीत्वं, ततो जातेऽर्थे सन्धिवेलादीत्यणो वार्तिकेन लुगिति भावः । नचाऽणो लुकि लुक्तद्धितेति टापो लुकि पुनष्टाब्दुर्लभः, लक्ष्ये लक्षणस्येति न्यायादिति वाच्यम् । जातिगतस्त्रीत्वबोधनरूपफलस्याऽसिद्धतया प्रवृत्तेः । अत इत्यधीति । अकारान्तादण इत्यर्थः ।

ननु वतण्डात् स्त्र्यपत्ये यञो 'लुक् स्त्रिया'मिति लुकि प्रत्ययलक्षणेन प्राचामिति प्राप्तष्फं बाधित्वा

---

+ १ । ३ । २८ × सन्धिवेलाद्यृतु० ४ । ३ । १६; लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम् ४ । ३ । ३४ वा० १; लुक् तद्धितलुकि १ । २ । ४९ * टिड्ढाणञ्० ४ । १ । १५ † वतण्डाच्च; लुक् स्त्रियाम् ४ । १ । १०८; १०९ ‡ प्राचां ष्फ तद्धितः ४ । १ । १७

ऽन्यभूतस्यानल्विधाविति वचनान्न भवति ।

गोरात्वम्—गामिच्छति गव्यति++ । प्रत्ययलक्षणेनाऽमि 'औतोऽम्शसोः' [ ६ । १ । ९३ ] इत्यात्वं प्राप्नोति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा' विति वचनान्न भवति ।

**तस्य दोषो ङौ नकारलोपेऽस्वम्विधयेः ॥ १३ ॥**

तस्यैतस्य लक्षणस्य दोषो ङौ नकारलोपः—आर्द्रे चर्मन् लोहिते चर्मन् × । प्रत्ययलक्षणेन 'यचि भम्' [ १ । ४ । १८ ] इति भसंज्ञा सिद्धा भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'विति वचनान्न प्राप्नोति ।

इत्वम्—आशीः* । प्रत्ययलक्षणेन 'हली'तीत्वं सिद्धं भवति† । स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'विति वचनान्न प्राप्नोति ।

इम्—अतृणेट्‡ । प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति × । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधा'विति वचनान्न प्राप्नोति । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं 'सतो निमित्ताऽभावात्पदसंज्ञाभावस्तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवी'रिति । नैष दोषः । वक्ष्यत्यत्र

---

प्र०—शार्ङ्गरवादिपाठात्प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात् । अत इत्यधिकारादल्विधि ष्फः ।

गव्यतीति । 'औतोऽम्शसो'रित्यत्राऽचीत्यनुवर्तनादल्विधिरात्त्वम् ।

चर्मन्निति । सुपां सुलुगिति ङेर्लुक् । अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति 'न ङिसंबुद्ध्यो'रिति वक्तव्यं जायते ।

परत्वाद्दीर्घत्वमिति । सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवतीति सूत्रार्थः । परिवी-

---

उ०—परत्वान्ङीन् स्यात् शार्ङ्गरवादिपाठादत आह—यथेति । तत्र हि सूत्रे यञ इति वर्तते । सर्वत्र प्रहणादिति । तद्धि पूर्वसूत्रेऽपकृष्यते ।

औतोमिति । एकादेशविधायकं हि तत् । अचीति । अजाद्योरित्यर्थः । अत एव तद्धितशसो निवृत्तिः ।

भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रति दूषणमाह—तस्य दोष इति । स्थानिसंज्ञानुदेशादिस्यस्येत्यर्थः । इत्वम्—'शास इदङ्हलो'रिति । इम्—'तृणह' इत्यनेन ।

भाष्ये वक्ष्यत्यत्रेति । 'न ङी'ति ङौ नलोपप्रतिषेधाज्ज्ञापकात्प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपम्, अनुपदमेतत्सूत्र एवेत्यर्थः । शास्त्रपरेति । उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव

---

++ सुपो धातुप्रातिपदिकयोः २ । ४ । ७१

× सुपां सुलुक्० ७ । १ । ३९　　* वेरपृक्तस्य ६ । १ । ६७　　† शास इदङ्हलोः ६ । ४ । ३४　　‡ हलङ्याब्भ्यो० ६ । १ । ६८　　+ तृणह इम् ७ । ३ । ९२

**उगिद्वर्णग्रहणवर्जम् ॥ ४ ॥**

उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा । उगिद्ग्रहणम्—भवती अतिभवती, महती अतिमहती+ । वर्णग्रहणम्–'अत इञ्' [ ४ । १ । ९५ ] दाक्षिः प्लाक्षिः ।

अस्ति चेदानीं कश्चित्केवलोऽकारः प्रातिपदिकं यदर्थो विधिः स्यात् ? अस्ती-त्याह–अततेर्डः–अः, तस्यापत्यम्, 'अत इञ्' इः ।

**अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् ॥ ५ ॥**

अकज्वतः सर्वनामाव्ययविधौ, श्नम्वतो धातुविधावुपसङ्ख्यानं कर्तव्यम् । अकज्वतः [ सर्वनामविधौ–] सर्वके विश्वके × । अव्ययविधौ–उच्चकैः नीचकैः* । श्नम्वतः—भिनत्ति छिनत्ति† ।

किं पुनः कारण न सिध्यति ? इह—तस्य वा ग्रहणं भवति, तदन्तस्य वा । न चेदं तत्रापि तदन्तम् ।

---

**प्र०—अतिमहतीति** । महान्तमतिक्रान्तेति प्रादिसमासः । तत्र यद्यपि गौरादिषु वृहन्महदिति पठ्यते, तथापि **अनुपसर्जनाधिकारात्**तत्र ङीष्न भवतीति उगिल्लक्षणो ङीप्प्राप्यते । अन्ये तु गौरादिष्वेतयो प्रमादपाठमाहुः । तथा चोक्तम्—**नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमिति** । ङीषि सति उदात्तस्य सिद्धत्वात् किं नद्या उदात्तविधानेन । अत इञिति । तदन्तविधावसति ञित्करणमुत्तरार्थं स्यात् ।

**सर्वक इति** । अकचि कृते शीभावो न स्यात् । **उच्चकैरिति** । तत्रैवाऽकचि कृते लुग्न स्यात् । उच्चकैरधीयानेत्यत्र्**अव्ययानां प्रतिषेध** इति पराङ्गवद्भावनिषेधो न स्यात् । **उच्चकैर्मुखमिति** 'नाव्ययदिक्शब्दे'ति मुखस्वरनिषेधो न स्यात् । **भिनत्तीति** । धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिद्धयतीत्यभिनोऽत्रेति **दर्श्वेति** धातोर्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् । अन्येत्वाहुः-भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात्सतिशिष्टः स्वरो धातुस्वर एष्टव्यः ।

---

**उ०—तत्र यद्यपीति** । एवं च ङीबभावेऽपि ङीषा सिद्धिरिति भावः । **किं नद्या इति** । सत्यपि पाठे उपसर्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय तच्चारितार्थ्याच्चिन्त्यमिदम् । एवं च तस्याऽऽवश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित् । ननु इञो ञित्वाद्वृद्धिस्वराद्यर्थात्तदन्तविधिस्तत्र, न हि अशब्दस्य **यस्येति** चेति लोपे तेषां संभवोऽस्तीत्यत आह—**उत्तरार्थमिति** । बाह्वविरित्यादौ स्वरादिसिद्धये इति भावः ।

**अकचीति** । सर्वे जसिति स्थितेऽन्तरङ्गानपीति न्यायेन शीभावादि बाधित्वाऽकचि **यस्मात्प्रत्ययविधिरित्युक्तेरप्रत्यय** इति निषेधाऽभावे प्रातिपदिकत्वेन सुपो लुकि, पुनर्जसि शी न स्यादित्यर्थः । लुगिति । तथा यद्यपि **हल्ङ्यादिसूत्रेणाऽपि** सोर्लोपः सिध्यति, तथापि सर्वविभक्त्युत्पत्तिपक्ते इदम् । **पराङ्गे**ति । **अन्येत्वाहुरिति** । श्नमो चामन्त्रिताद्युदात्तत्वं स्यात् । **चितः सप्रकृतेरित्यन्तोदात्तश्चेष्यत** इति भावः । तस्याऽनुदात्तत्वप्राप्तिरिति मित्त्वेन **परश्चेत्यस्य** तत्राऽप्रवृत्तौ सत्संनियोगशिष्टाद्युदात्तत्वाऽप्रवृत्त्या शेषनिघातेन तस्याऽनुदात्तत्वप्राप्तिरिति भावः । ननु भिनत्तीत्यादौ **यदागमा** इति न्यायेन न दोष इति चेन्न, अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । नचाऽत्र तदस्ति । अन्तावयव इत्यंशस्याऽप्रवृत्त्याऽवयवत्वे मानाऽभावात् । यस्य विहितस्तदन्ताऽवयव इति तदर्थात् । एवं च नन्दतीत्यपि तदुदाहरणं बोध्यम् । भाष्ये च **श्नम्वत** इत्युपलक्षणं बोध्यमिति कश्चित् ।

---

+ उगितश्च ४ । १ । ६ × जशःशी ७ । १ । १७ * अव्ययादाप्सुपः २ । ४ । ८२ † धातोः ६ । १ । १६२ १—इदं न सर्वत्र

## सिद्धं तु तदन्तान्तवचनात् ॥ ६ ॥

सिद्धमेतत् । कथम् ? 'तदन्तान्तवचनात्' । तदन्तान्तस्येति वक्तव्यम् । किमिदं तदन्तान्तस्येति ? तस्यान्तस्तदन्तः, तदन्तोऽन्तो यस्य तदिदं तदन्तान्तम्, तदन्तान्तस्येति ।

स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य—उष्ट्रमुखः खरमुखः । एवमिहापि तदन्तः अन्तो यस्य [ सोऽयं[1] तदन्तः ] तदन्तस्येति ।

---

प्र०—**सिद्धं त्विति** । सर्वशब्दस्य योऽन्त्योऽकारः सोऽन्त्य. सर्वकशब्दस्य । एवमन्यत्रापि योज्यम् । तत्र सर्वनामानीत्यन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अव्ययसंज्ञाक्षिप्त स्वरादिभिः । धातुसंज्ञाभाजो वाप्रकारा भूवादिभिरिति भाव. ।

**उत्तरपदलोप इति** । वाचनिकोऽत्र लोपो, न तु सामर्थ्याद्गम्यमानार्थस्य निवृत्तिरित्याहुः। अन्ये तु वर्णयन्ति—यथावयवदर्शनाद्गौरित्यवयविविषया बुद्धिरुदेति, तथेहापि सर्वशब्दस्य योवयवोऽन्त्यस्तत्रैव सर्वशब्दविषयबुद्ध्युत्पादात्तदवयवान्तः सर्वशब्दान्त इति व्यपदिश्यते । अथवाऽवयवे समुदायरूपारोपात्तदन्तता भविष्यति । गौणेनाप्यर्थेन शास्त्रव्यवहारो दृश्यते—छत्त्रपार्श्वायःशूलदण्डाऽजिनशीतोष्णार्द्धह्रस्वादिषु ।

---

उ०—ननु तदन्तान्तस्येति पाठेऽपि विशेष्याऽसंनिधानात् कथं सर्वादीनीत्यादावस्य प्रवृत्तिरत आह—**तत्रेति** । **अव्ययेत्यस्याऽन्वर्थैरित्यादिः** । वस्तुतः शब्दरूपं विशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते । इदं तु चिन्त्यं,—शाब्दसंज्ञिनोऽसत्त्वे हि स्यादस्याक्षेपः, सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाऽभावात् । किञ्चान्वर्थत्वं योगरूढत्वम्. योगरूढस्थले हि योगान्वितरूढ्यर्थस्यैव प्रतीतिर्दृष्टा, न तु तयोः परस्परमुद्देश्यविधेयभाव इति कस्य विशेष्यतया तदन्तविधिः स्यादिति बोध्यम् । **वाप्रकारा इति** । 'वा'सदृशा इत्यर्थः । भूवादय इति सूत्रे द्वन्द्वैकशेषगर्भो बहुव्रीहिरिति भावः । एवं हि 'प्रभू' 'पराभू' इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम् । तस्मादयं समाधिरकञ्चित्कर एवेति बोध्यम् । एरजित्यादौ तु व्यपदेशिवद्भावेनैतन्न्यासे सिद्धिर्बोध्या ।

**न तु सामर्थ्यादिति** । उष्ट्रमुखवत्तदभावादित्यर्थः । **यथावयवेति** । अवयवी प्रत्यवयवमवयवान्तर साचिव्यौ समवेत इति भावः । नन्वेवमपि भूयोऽवयवसंनिकर्षस्यैवाऽवयविप्रत्यक्षे हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह—**अथवेति** । ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह—**गौणेनापीति** । स्वरितत्वगुणयोगाद्यथान्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः । तदेवाह—**छत्त्रेत्यादि** । **छत्त्रं** गुरुच्छिद्रावरणं गौणयोच्यते । तत्रैव हि च्छात्र इष्यते । एवं पार्श्वशब्दोऽनृजूपाये, **अयः शूलशब्द**-स्तीक्ष्णोपाये, **दण्डाजिनो**—दम्भे, **शीतोऽ**लसे, **उष्णः** शैघ्र्ये गौणः । तत्रैव पार्श्वकायःशूलिकदाण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टेः । तस्यादित इत्यत्र चार्धह्रस्वशब्दोऽर्धमात्रालाक्षणिक इत्याद्यूह्यम् । आदिना-ऽऽधारोऽधिकरणमित्यादिसंग्रहः ।

---

१ क्वचिन्न ।

**तदेकदेशविज्ञानाद्वा सिद्धम् ॥ ७ ॥**

तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रहणेन गृह्यते । तद्यथा गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । तथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ।

विषम उपन्यासः । इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते सङ्ख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति, एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति, नैवाधिके भवन्ति, न न्यूने । केचिद्यावदेव तद्भवति तावदेवाहुः—य एते जातिशब्दा गुणशब्दाश्च—तैलं घृतमिति, खार्यामपि भवन्ति द्रोणेऽपि । शुक्लो नीलः कृष्ण इति, हिमवत्यपि भवति वटकणिकामात्रेऽपि द्रव्ये । इमाश्चापि संज्ञा अक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'तदेकदेशभूतं त ग्रहणेन गृह्यते' इति । यदयं 'नेदमदसोरकोः' [ ७ । १ । ११ ] इति सककारयोरिदमदसोः प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति । ततः सककारयोः प्रति-

---

प्र०—तदेकदेशविज्ञानादिति । मध्यपातिनोऽकजादयस्तदेकदेशा इति तत्त्वबुद्धिं न विघ्नन्ति ।

**अक्तपरिमाणानामिति** । परिच्छिन्नपरिमाणानामित्यर्थः । **यावदेवेति** । अल्पमधिकं वेत्यर्थः । **इमाश्चापीति** । सर्वाद्युपादानेन संज्ञा क्रियमाणा कथं सर्वकादीनां भवन्ति । नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः ।

**एवंतर्हीति** । यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापका-

---

उ०—**मध्यपातिन इति** । यस्याऽकजादिस्तदेकदेशत्वेनाऽकजादेर्विशनादिति वार्तिकार्थः ।

भाष्ये **अक्तपरिमाणानामिति** । अत्र परिमाणमानुपूर्वीविशेषोऽपि । **परिमाणे**त्युपलक्षणं परिच्छिन्नार्थानाम् । तदाह—**सङ्ख्येति** । भाष्ये—**अर्थानामिति** । संज्ञिभूतानां शब्दानामित्यर्थः । नन्वधिकगड्वादिजननेऽपि शुनः श्वत्ववदकस्याऽधिकस्योपजनेऽपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह—**नित्या इति** । वस्तुतः परिच्छिन्नपरिमाणग्रहणं एकदेशविकृतन्यायस्याप्यप्रवृत्तिरिति भाष्याशयः ।

ननु नित्यशब्दवादेऽकज्वतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमित्यत आह—**यद्यपीति** । **अव्यतिरेककृत इति** । अनवयवत्वेऽपि ज्ञापकाद्भेदबुद्धिं न कुर्वन्तीत्यर्थः । एकदेशसादृश्यं च

षेधं शास्ति ।

कानि पुनरस्य योगस्य प्रयोजनानि ?

प्रयोजनं सर्वनामाव्ययसंज्ञायाम् ॥ ८ ॥

सर्वनामाव्ययसंज्ञायां प्रयोजनम्† । सर्वे परमसर्वे, विश्वे परमविश्वे । उच्चैः परमोच्चैः, नीचैः परमनीचैरिति ।

उपपदविधौ भयाढ्यादिग्रहणम् ॥ ९ ॥

उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम्‡ । भयङ्करः अभयङ्करः । आढ्यङ्करणम् स्वाढ्यङ्करणम् ।

ङीब्विधावुगिद्ग्रहणम् ॥ १० ॥

ङीब्विधावुगिद्गहणं प्रयोजनम्+ । भवती अतिभवती । महती अतिमहती ।

प्रतिषेधे स्वस्रादिग्रहणम् ॥ ११ ॥

ङीप्प्रतिषेधे स्वस्रादिग्रहणं प्रयोजनम्× । स्वसा परमस्वसा । दुहिता परमदुहिता ।

---

प्र०—दव्यतिरेककृत इत्यर्थः ।

**प्रयोजनमिति** । अन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अपूर्वो वा तदन्तविधिरुपसंख्यायते । एवमुत्तरत्र विज्ञेयम् ।

**उपपदविधाविति** । भयाढ्यादिभिः कर्म विशेष्यते । 'क्षेमप्रियमद्रेऽण्चे'त्यत्र तु कर्मणा क्षेमादय इति तदन्तविध्यभावः ।

**प्रतिषेध इति** । विधीयत इति विधिः, सामान्येन गृह्यत इति प्रतिषेधेऽपि तदन्तविधिर्भवति । स्वस्रादिभिः प्रातिपदिकस्य विशेषणात् ।

---

उ०—मध्यपातित्वेन बोध्यम् ।

ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्त्तिकारम्भेण वार्त्तिककृतोऽन्वर्थत्वं नेष्टम् । किंच संज्ञिनामुपात्तत्वेनाक्षेपे मानाऽभाव इत्यत आह—**अपूर्वो वेति** । एतद्वार्त्तिकमूलाद्व्याख्यानादन्यावर्त्तकमपि शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः । भयं चाढ्यादि चेति द्वन्द्वमभिप्रेत्याह—**क्षेमेति** ।

**विधीयते इति** । सूत्रे विधिशब्देन प्रतिषेधविरोधी न विवक्षित इति भावः ।

---

† सर्वादीनि सर्वनामानि; स्वरादिनिपातमव्ययम् १ । १ । २७; ३७

‡ मेघर्तिभयेषु कृञः, आढ्यसुभग० ३ । २ । ४३; ५६ + उगितश्च ४ । १ । ६ क्वचिन्न । × न षट्स्वस्रादिभ्यः ४ । १ । १०

## अपरिमाणबिस्तादिग्रहणं च प्रतिषेधे ॥ १२ ॥

अपरिमाणबिस्तादिग्रहणं च ङी'प्रतिषेधे प्रयोजनम् । 'अपरिमाणबिस्ताचित-कम्बल्येभ्यो न तद्धितलुकि' [ ४ । १ । २२ ] । द्विबिस्ता द्विपरमबिस्ता । त्रिबिस्ता त्रिपरमबिस्ता । द्व्याचिता द्विपरमाचिता ।

## दिति ॥ १३ ॥

दितिग्रहणं च [ एयविधौ ] प्रयोजनम् । दितेरपत्यं दैत्यः । अदितेरपत्य-मादित्यः । 'दित्यदित्यादित्य' [ ४ । १ । ८५ ] इत्यदितिग्रहणं न कर्तव्यं भवति ।

## रोण्या अण् ॥ १४ ॥

रोण्या अण्ग्रहणं च प्रयोजनम्* । आजकरौणः । सैंहिकेरौणः ।

## तस्य च ॥ १५ ॥

तस्य चेति वक्तव्यम् । रौणः ।

किं पुनः कारणं न सिध्यति । [ ननु ] तदन्ताच्च तदन्तविधिना सिद्धम्, केवलाच्च व्यपदेशिवद्भावेन ? 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' । किं पुनः कारणं 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ? इह सूत्रान्तात् ठग्भवति, दशान्ताड्डो भवतीति† केवलादुत्पत्तिर्मा भूदिति । नैतदस्ति प्रयोजनम् । सिद्धमत्र तदन्ताच्च तदन्तविधिना, केवलाच्च व्यपदेशिवद्भावेन । सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञाप-

प्र०—द्विपरमबिस्तेति । द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यत इति तदन्तविधिरिति ।

दितिग्रहणं चेति । परमदित्यादिभ्यस्त्वनभिधानाण्ण्यो न भवति ।

तस्य चेति । 'स्वं रूप'मित्यस्यानुवृत्तिं वार्तिककारो नेच्छति । तथा चाऽऽद्यन्तवदि-त्यत्र 'येन विधिस्तदन्तत्वे' इति प्रयोजनमवोचत् ।

व्यपदेशिवद्भावोऽप्रातिपदकेनेति । ननु रोणीशब्दो न प्रातिपदिकं, प्रत्ययान्तत्वात् । नैष दोषः । 'अप्रातिपदिकेने'त्यत्र वाक्ये 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति

उ०—ननु 'स्वं रूप'मित्यनुवृत्त्या स्वस्यापि संज्ञासिद्धौ किं तस्य चेत्यनेनाऽत आह—स्वमिति । तेन सूत्रप्रत्याख्यानादिति तात्पर्यम् ।

प्रत्ययान्तत्वादिति । स्त्रीप्रत्ययान्तत्वादित्यर्थः । स्वरूपविधिविषयैवेति । प्रातिपदिकविशेषोपादा-

१—क्वचिन्न । * रोणी ४ । २ । ७८ २—'सैंहक' पा० ।

† कन्थ्यादिसूत्रान्तादठक् ४ । २ । ६०; तदस्मिन्नधिकमिति दशान्ताड्डः ५ । २ । ४५

यत्याचार्यः—सूत्रान्तादेव, दशान्तादेवेति । नाऽत्र तदन्तादुत्पत्तिः प्राप्नोति । इदानीमेव ह्युक्तं—'समासप्रत्ययविधौ प्रतिषेधः' इति ।

सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति—'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति, यदयं 'पूर्वादिनिः' 'सपूर्वाच्च' [ ५ । २ । ८६; ८७ ] इत्याह । नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् ? सपूर्वात्पूर्वादिनिं वक्ष्यामीति । यत्तर्हि योगविभागं करोति । इतरथा हि 'पूर्वात्सपूर्वादिनि'-रित्येव ब्रूयात् ।

किं पुनरयमस्यैव शेषः—'तस्य चे'ति ? 'ने'त्याह । यच्चानुक्रान्तं, यच्चानु-

प्र०—वचनात्स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति। न च लिङ्गविशिष्टपरिभाषा स्वरूपविधिविषयैवेति प्रातिपदिकसूत्रे वक्ष्यते। **सपूर्वादिति**। पूर्वग्रहणे त्यक्ते सपूर्वादिनिरित्युच्यमाने सर्वस्मात्सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः।

**यच्चानुक्रान्तमिति**। अप्रातिपदिकेनेति तु निषेधो यत्राऽन्तग्रहणं सूत्रे एवोपात्तं तत्र।

उ०—नविहितकार्यविषयैवेत्यर्थः। **किं पुनः कारणमिति**। भाष्ये कारणशब्दः प्रयोजनवाची। **तज्ज्ञापयतीति**। बोधयतीत्यर्थः। अन्तग्रहणं नियमार्थमिति तात्पर्यम्। **नात्र तदन्तादिति**। ननु समासप्रत्ययविधावित्यस्य विशेषणविशेष्यभावव्यत्यासमात्रतात्पर्यग्राहकतया दित्यादाविवाऽत्रापि तदन्तविधिसंभवेनाऽन्तग्रहणसामर्थ्यादेव केवलेऽप्रवृत्तौ अप्रातिपदिकेनेति व्यर्थम्। एतेन ग्रहणवतेति निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम्। किंच परमतदित्यादिभ्य इवानभिधानेन केवलेऽप्रवृत्तिरिति व्यर्थैव सेति चेन्न। विशेषणविशेष्यभावव्यत्यासतात्पर्यग्राहकतया 'समासे'त्यादिनिषेधवचनवदस्याप्यावश्यकत्वात्सूत्रभाष्यवार्त्तिकरूढतात्पर्यग्राहकाभावेऽपि तदन्तविधिकल्पनेऽतिप्रसङ्गापत्तेः। अत एवोगिद्वर्णग्रहणवर्जमित्यादेश्च रितार्थ्यम्। अनभिधानेन प्रत्याख्यानं तु चमत्कारकारि। **सा तर्ह्येषेति**। व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा। **यदयमिति**। **पूर्वादित्यंशो ज्ञापक** इत्यर्थः। **सर्वस्मादिति**। पूर्वशब्दव्यतिरिक्तादपीत्यर्थः भाष्ये—**तत्तर्हि योगविभागमिति**। नन्विष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थं तथा पाठः। अत एवानिष्टीति प्रयोगसिद्धिरिति वाच्यम्। एतद्भाष्यप्रामाण्येन तत्प्रयोगाऽभावानुमानात्। प्रकारान्तरेण सिद्धौ तु नाऽस्माकं क्षतिः, एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेति दिक्। एवं च रोणीत्यादौ केवलस्याऽप्राप्तेस्तस्य चेति वक्तव्यमिति सिद्धम्।

ननु तदन्तविधिविषये **तस्य चे**त्यनेन केवलादपिचेद्व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यर्थमत आह—**अप्रातिपदिकेनेति**। **ज्ञापकस्य** सजातीयापेक्षत्वादिति भावः। अत एव पूर्वादिनिरित्येव तदन्तविधिना सिद्धे सपूर्वाच्चेत्यस्य ग्रहणवतेति परिभाषाज्ञापकत्वं कैयटोक्तं सङ्गच्छते। यत्रान्तेत्यन्तग्रहणमुपलक्षणम्। अत एव एकगोपूर्वादित्यस्य केवलैकशब्दे न प्रवृत्तिः। ग्रहणवतापि प्रत्ययविधौ निषेधस्यैवानु-

क्रंस्यते सर्वस्यैव शेषः—तस्य चे'ति ।

**रथसीताहलेभ्यो यद्विधौ ॥ १६ ॥**

रथसीताहलेभ्यो यद्विधौ प्रयोजनम्‡ । रथ्यः । परमरथ्यः । सीत्यम् परम-सीत्यम् । हल्या परमहल्या ।

**सुसर्वार्धदिक्छब्देभ्यो जनपदस्य ॥ १७ ॥**

सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रयोजनम्+ । सु'—सुपाञ्चालकः सुमागधकः । सु । सर्व—सर्वपाञ्चालकः सर्वमागधकः । सर्व । अर्ध-अर्धपाञ्चालकः अर्धमागधकः । अर्ध । दिक्छब्द-पूर्वपाञ्चालकः अपरपाञ्चालकः । पूर्व मागधकः अपरमागधकः ।

**ऋतोर्वृद्धिमद्विधाववयवानाम् ॥ १८ ॥**

ऋतोर्वृद्धिमद्विधाववयवानां प्रयोजनम्× । पूर्वशारदम् अपरशारदम् । पूर्वनैदाघम्

---

प्र०—यथा दशान्त ड्ड इति दशाधिका अस्मिन्शत इत्यत्र न भवति ।

**यद्विधाविति** । ठग्विधौ तु तदन्तविधेरभावात्परमहलिक इति ठग्न भवति ।

**ऋतोरिति** । ऋतुवाचिन शब्दाद्यो वृद्धिमान प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः । शरदः पूर्वो भागः पूर्वशरत्, तत्र भवमिति ऋतुलक्षणोऽण् । तत्र वृद्धिमदिति वचनात्प्रावृषएण्य इत्यत्र तदन्तविधिर्न भवति । तेन ऋत्वणेव भवति—पूर्वप्रावृषमिति । प्रावृट्शब्दो वर्षापर्यायः । अवयवानामिति किम् । पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यण् न भवति ।

---

उ०—वादकं, लाघवात् । स्पष्टं चेदमसमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः ।

**रथ्ये**—तद्वहति रथेति यत् । **सीत्ये** नौवयोधर्मेति, **हल्ये**—मतजनहलात्करणजल्पकर्षेष्विति यत् । भाष्ये—**परमरथ्य इति** । **रथाद्रथाङ्गवोढ्रोरित्येवं** शैषिकप्रकरणे पाठेन सिद्धे **तद्वहतीत्यत्र रथग्रहणं** रथांशे तदन्तविधौ ज्ञापकम् । शैषिके यति हि द्विरथ इत्यादौ द्विगोर्लुगिति लुक् । तत्र सूत्रेऽचीति न संबध्यते । अनभिधानाच्च नाऽतिप्रसङ्गः । वहत्यर्थे तु द्विरथ्य इत्येव, तस्याऽप्राग्दीव्यतीयत्वात् । इतरयोस्तु वाचनिक एव । यत्तु हलसीराट्ठगित्यपि 'तस्येदं' तद्वहतीत्यधिकारे च ठ्क् पठ्यते, तत्तु इदंशब्देन वोढृरूपार्थाऽग्रहणज्ञापकम् । तदाह—**ठगभवतीति** ।

भाष्ये—**सुपाञ्चालक इत्यादि** । जनपदेत्यधिकारे अवृद्धादपि बहुतिति वुञ् । तद्विधौ चायं तदन्त-विधिः । सुसर्वार्धाज्जनपदस्य, दिशोऽमद्राणामिति उत्तरपदवृद्धिः ।

**वृद्धिमानिति** । वृद्धिनिमित्तमित्यर्थः । **अवयवानामिति** । 'पूर्वपदस्त्वे' इति शेषः । **शरद इति** । 'पूर्वापराधरे'त्येकदेशिसमासः । सन्धिवेलाद्यृत्विति अण् । 'अवयवादृतो'रित्युत्तरपदवृद्धिः । ननु शरच्छब्द

---

‡ रथाद्यत् ४ । ३ । १२१; तद्वहति रथयुगप्रासङ्गम्; नौवयोधर्मविषमूलसीता०; मतजनहलात् करणजल्पकर्षेषु ४ । ४ । ७६; ८१; ९७ + अवृद्धादपि बहुवचनविषयात् ४ । २ । १२५; सुसर्वार्धाज्जनपदस्य; दिशोऽमद्राणाम् ७ । ३ । १२; १३ १—क्वचिन्न ।

× सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ४ । ३ । १६; अवयवादृतोः ७ । ३ । ११

अपरनैदाघम् ।

ठञ्विधौ संख्यायाः ॥ १९ ॥

ठञ्विधौ संख्याया प्रयोजनम्* । द्विषाष्टिकम् पञ्चषाष्टिकम् ।

धर्मोत्तञः ॥ २० ॥

धर्मोत्तञः प्रयोजनम् † । धर्मं चरति धार्मिकः । अधर्मं चरति आधर्मिकः । 'अधर्माच्चे'ति‡न वक्तव्यं भवति ।

---

प्र०—कालाट्ठञित्येव हि भवति । तत्र हि यथाकथंचित्कालवाचिनो गृह्यन्ते ।

द्विषाष्टिकमिति । द्वे षष्टी परिमाणमस्येति समासे कृते आर्हादिति ठग्न भवति । संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् । तेन प्राग्वतेरिति ठञ्भवति । अध्यर्धपूर्वेति लुग्नभवति । 'सोस्यांशवस्नभृतय' इत्यतः सोस्येत्यनुवर्तमाने तदस्य परिणाममित्यत्र पुनः प्रत्ययार्थं समर्थविभक्तिनिर्देशात् । कृते वा लुकि पुनस्तन्निर्देशसामर्थ्यात् पुनः प्रत्ययः । तद्विधानसामर्थ्याच्च पुनर्लुगभावः ।

---

उ०—एव कालवाची न पूर्वशरच्छब्दइति कथं ठञित्यत आह—तत्रहीति । अत एव सन्धिवेलादिसूत्रे नक्षत्राणां कालेन विशेषणं सङ्गच्छते ।

भाष्ये—ठञ्विधौ सङ्ख्याया इति । तदस्य परिमाणं सङ्ख्यायाः संज्ञेति सूत्रे इति भावः । द्वे षष्टी परिमाणमस्येति । सङ्ख्यादिरस्य विशेष्यः । प्रतिषेधादिति । आर्हादगोपुच्छेत्यनेन तस्य प्रत्ययप्रतिषेधत्वात्तत्र तदन्तविधिर्भवत्येव । तेन प्राग्वतेरिति ठञ्विधायके सङ्ख्यायाः संज्ञेति सूत्रे तदन्तविधिसत्त्वेन प्राग्वतेरित्यधिकारप्राप्तष्ठञ् भवतीत्यर्थः । पुनः प्रत्ययार्थंसमर्थेति । अस्येति प्रत्ययार्थं । तदपि समर्थविभक्तिः । अनुवर्तमानस्य लुक्सम्बद्धतया पुनरुपादानेन तद्विलक्षणत्वसूचनादनेन विहितस्य लुगभाव इत्यर्थः । कृते वेति । अनुवर्तमानसोस्येतिसहितपरिमाणमित्यनेन विहितस्य लुकि पुनस्तदस्य परिमाणमिति वचनसामर्थ्यात्स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद्द्विगुनिमित्तत्वाऽभावाद्वा लुगभाव इत्यर्थः । इदं वृत्तिकारमतेनोक्तम् । वस्तुतस्तु तदस्येति पुनरुपादानमात्रेणाऽऽर्हीयत्वापगमे तत्त्वेऽपि लुगभावे वा द्वे षष्टी जीवितपरिमाणस्येत्यर्थेऽनेन ठञि लुकमाशङ्क्य कालादित्यधिकारस्थेन तमधीष्ट इति सूत्रेण ठञा द्विषाष्टिकः साधितो भाष्ये । कालग्रहणेन यथाकथञ्चित् कालवाचिनो ग्रहणमिति चोक्तं, तद्विरुध्येत । त्वद्रीत्याऽनेनाऽपि ठञि लुगभावात् । तस्माद्द्वे षष्टी परिमाणमस्य सङ्घस्य स परिमाणमस्येति भाष्योदाहरणार्थः । तस्य द्विगुनिमित्तत्वाऽभावान्न लुक् । सङ्घे द्विषष्ट्यनतिरेकस्यापि सत्त्वात्तस्यापि सङ्ख्याशब्दत्वमित्यपरे ।

---

* तदस्यपरिमाणम्; संख्यायाः संज्ञा०; प्राग्वतेष्ठञ्; आर्हादगोपुच्छ० ५ । १ । ५७; ५८; १८; १९ † धर्मंचरति ४ । ४ । ४१ १—'आधार्मिकः' इति बाहुल्येन पाठः ।

‡ ४ । ४ । ४९ वा० १

**पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ॥ २१ ॥**

पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम् ।

पदाधिकारे किं प्रयोजनम् ?

**प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु+ ॥ २२ ॥**

इष्टकचितं चिन्वीत, पक्वेष्टकचितं चिन्वीत । इषीकतूलेन, मालमुञ्जेषीकतूलेन । मालभारिणी कन्या, उत्पलमालभारिणी कन्या ।

अङ्गाधिकारे किं प्रयोजनम् ?

**महदप्स्वसृनप्तॄणां दीर्घविधौ ॥ २३ ॥**

महदप्स्वसृनप्तॄणां दीर्घविधौ × प्रयोजनम् । महान्, परममहान् । महत् । अप्—आपस्तिष्ठन्ति, स्वापस्तिष्ठन्ति । अप् ॥ स्वसृ—स्वसा स्वसारौ स्वसारः, परमस्वसा परमस्वसारौ परमस्वसारः । स्वसृ ॥ नप्तृ—नप्ता नप्तारौ नप्तारः, एवं परमनप्ता परमनप्तारौ परमनप्तारः ।

**पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् ॥ २४ ॥**

पद्भावः प्रयोजनम्* । द्विपदः पश्य । अस्ति चेदानीं कश्चित्केवलः पाच्छब्दो

---

प्र०—**पदाङ्गाधिकार इति** । पदशब्देनोत्तरपदं गृह्यते, पदैकदेशलोपात् । उत्तरपदेन सामर्थ्याक्षिप्तं पूर्वपदमिष्टकादिभिर्विशेष्यते ।

**महदप्स्वस्त्रिति** । महदादिभिरङ्गं विशेष्यते । **स्वाप इति** । 'न पूजनादि'ति समासान्तनिषेधः । 'अपो भी'ति तत्वमपि स्वद्भिरिति भवति ।

**द्विपद इति** । **पादः पदित्यत्र** पाच्छब्देनाऽङ्गं विशेष्यते । **पादस्य पदेति** । ननु पद्भावे

---

उ०—भाष्ये-**पदाङ्गे**ति । तदन्तविधेरपवादोऽयम् । अत एव **तस्य चेति** पुनरभिहितम् । तदन्तविधौ हि बहुच्पूर्वेऽपि स्यात्तच्च नेष्टमिति वार्तिकाशयः । **पदशब्देनेति** । अत एव भाष्ये उत्तरपदाधिकारे प्रयोजनदानम् ।

तदन्तविध्यपवादत्वादस्यापि विशेषण एव प्रवृत्तिरित्याशयेनाह—**उत्तरपदेनेति** । **शब्दरूपं** विशेष्यमादायेत्यन्ये ।

**समासान्तनिषेध इति** । ऋक्पूरबिति प्राप्ते । अत एव द्व्यन्तरुपसर्गेतीत्त्वं न । तत्र **स्वाप इति** कृतसमासान्तानुकरणम् । व्यत्ययेन षष्ठ्यर्थे प्रथमा । अत्र चेदमेव भाष्यं मानमित्याहुः । **तत्वमपीति** । वार्तिकस्थेन **दीर्घविधाविति** विषयनिर्देशेनेदं विरुध्यते ।

भाष्ये—**पद्युष्मदस्मदस्थ्यादीति** समस्तं पृथक्पदम् । **अनडुह इति** त्वसमस्तम् । अन्यथा

---

\+ ६ । ३ । ६५ × सान्तमहतः संयोगस्य; अप्तृन्तृच्स्वसृनप्तृ० ६ । ४ । १०; । ११

* पादः पत् ६ । ४ । १३०

यदर्थो विधिः स्यात् ? नास्तीत्याह । एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम्—'हिमकाषिहतिषु च, [ ६ । ३ । ५४ ]। यथा पत्काषिणौ पत्काषिणः, एवं परमपत्काषिणौ परमपत्काषिणः। यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति 'पादस्य पदाज्यातिगोपहतेषु' यथेह भवति—पादेनापहतं पदोपहतम्, एवमत्रापि स्यात्—दिग्धपादेनोपहतं दिग्धपादोपहतमिति। एवं तर्ह्यङ्गाधिकार एव प्रयोजनम्। ननु चोक्तम्—नास्ति केवलः पाच्छब्द इति। अयमस्ति पादयतेरप्रत्ययः पात्, [ पदः ] पदा पदे। पत्।

युष्मद् अस्मद्† । यूयम् वयम्, अतियूयम् अतिवयम्।

अस्थ्यादि‡ । अस्थ्ना दध्ना सक्थ्ना, परमास्थ्ना परमदध्ना परमसक्थ्ना।

अनडुहो नुम्+ । अनड्वान् परमानड्वान्।

**द्युपथिमथिपुङ्गोसखिचतुरनडुत्त्रिग्रहणम् ॥ २५ ॥**

द्युपथिमथिपुंगोसखि चतुरनडुत्त्रिग्रहणं प्रयोजनम् × । द्यौः, सुद्यौः । पन्थाः,

---

प्र०—तदन्तविधिरुक्त, अयं तु पदभावविधिः। नैष दोषः। पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः। अनेनैव न्यायेन पदमात्रेऽपि तदन्तविधिप्रसङ्गः। यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरत्राऽनुमानात्। **एवं तर्हीति**। एवं च परमपादेन कषतीति विवक्षायां परमपादकाषीति भवति, यदा तु परमः पत्काषीति विवक्षा तदा परमपत्काषीति भवति। **पादयतेरिति**। पदेर्ण्यन्तादित्यर्थः।

**परमपन्था** इति क्वचित्पाठः स त्वयुक्त, समासान्तविधानात्। 'न पूजना'दित्यत्र 'पूजायां

---

उ०—नुमोऽनडुच्छब्दमात्रान्वयित्वेनाऽसामर्थ्यात्समासो न स्यात्। पदादयोऽनडुहो नुम् च तदन्तविधिं प्रयोजयन्तीत्यर्थः। समासे एव **पादस्य** लोप इत्यन्तलोपविधानात्सामर्थ्यादेव [ पदित्यधिकारात् ] तदन्तविधिर्भविष्यतीत्याशयेन काका पृच्छति—भाष्ये—**अस्ति चेति**। आचार्यदेशीय आह— **एवं तर्हीति**। संनिधेलिङ्गं बलीय इति भाव.। **तदन्तविधिरिति**। तदपवाद उत्तरपदविधिरित्यर्थः। अर्थाधिकाराश्रयेण परिहरति—**नैषेति**। नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणाविति **पूर्वोदाहृता**ऽसङ्गतिरत आह—**एवं चेति**। अर्थभेदेन तत्साध्विति भावः। पादशब्दादाख्यानणिचि णिनिमित्तकटिलोपस्य स्थानिवत्त्वात्पदादेशाऽप्राप्तेराह—**पदेरिति**। '**क्वौ** लुप्त'मिति निषेधान्न णिलोपस्य स्थानिवत्त्वमित्यर्थः। अत एव 'पादस्य पादहस्त्यादिभ्य'इति नाऽसूत्रि। तथासति तस्यैव प्रतिपदोक्तत्वात्पद्भावः स्यान्नाऽस्येति तात्पर्यम्।

**इह**—द्युपथीति प्रयोजनवार्तिके। **इत्यत एवेति**। **पद्युष्मदिति** वार्त्तिकस्थादित्यर्थः। **आदिस्य**

---

१—क्वचिन्न। † युस्मदस्मदोरनादेशे; यूयवयौ जसि ७ । २ । ८६; ९३

‡ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७ । १ । ७५ + सावनडुहः ७ । १ । ८२

× दिव औत्, पथिमथि०; पुंसोऽसुङ्; गोतोणित्; सख्युरसम्बुद्धौ; चतुरनडुहोरामुदात्तः; त्रेस्त्रयः ७ । १ । ८४; ८५; ८६; ९०; ९२; ९८; ५३

सुपन्थाः । मन्थाः, सुमन्थाः । पुमान्, परमपुमान् । गौः, सुगौः । सखा सखायौ सखायः, सुसखा सुसखायौ सुसखायः, परमसखा परमसखायौ परमसखायः । चत्वारः , परमचत्वारः । अनड्वाहः, परमानड्वाहः । त्रयाणाम् परमत्रयाणाम् ।

त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च ॥ २६ ॥

त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च प्रयोजनम् । सः, अतिसः† । भस्त्रका भस्त्रिका, निर्भस्त्रका निर्भस्त्रिका, बहुभस्त्रका बहुभस्त्रिका‡ । स्त्रीग्रहणं च प्रयोजनम्+ । स्त्रियौ स्त्रियः, राजस्त्रियौ राजस्त्रियः ।

वर्णग्रहणं च सर्वत्र ॥ २७ ॥

वर्णग्रहणं च सर्वत्र प्रयोजनम् । क्व सर्वत्र ? अङ्गाधिकारे चाऽन्यत्र च । अन्यत्रोदाहृतम् । अङ्गाधिकारे—'अतो दीर्घे यञि' 'सुपि च' [ ७ । ३ । १०१; १०२ ] इहैव स्यात्—आभ्याम्, घटाभ्यामित्यत्र न स्यात् ।

---

प्र०—स्वतिग्रहण'मिति वचनान्नास्ति निषेधः । तस्मात्सुपन्था इति पाठः । 'परमगौ'रित्यपपाठः, 'गोरतद्धितलुकी'ति टज्विधानात् । तस्मात्सुगौरिति पाठः । 'परमसखाया'विति बहुव्रीहिः । तत्पुरुषे तु टचा भाव्यम् । अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः । 'अनडुहो नु'मित्यत एव वचनादादित्यधिकारादमामोः कृतयोर्नुम्विधानान्नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात् । अन्ये त्वाहुः—असतीह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवाऽमामौ तदन्तस्य स्याताम् । परमानड्वाह इत्यत्र त्वाम्न स्यादिति पुनः पाठः कर्तव्यः । पूर्वत्राऽपि पाठो नुमर्थः कर्तव्यः । अन्यथा अमामोरेव तदन्तविधिः स्यान्न तु नुम्विधौ ।

**अतिस इति** । शोभनः स इत्यर्थः । उपसर्जने तु तच्छब्दार्थेऽतितदिति भवति । **बहुभस्त्रिकेति** । **नञ्पूर्वाणामपी**ति न वक्तव्यं भवति ।

**वर्णग्रहणं चेति** । यद्येवमुगिद्वर्णग्रहणवर्जमित्यत्र किमर्थं वर्णग्रहणम् । उच्यते—प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिवारणार्थम् ।

---

उ०—**धिकारादिति** । **आम्**इत्यतः । **अन्यथा** नुम् बाधकः स्यात्, अम्च नुमो बाधकः स्यादिति भावः ।

**अन्यथाऽमामोरेवेति** । म्वतुः साहचर्यादिति भावः ।

**अन्यत्रचेति** । भाष्यादङ्गाधिकारादन्यत्र प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा नोदयति—**यद्येवमिति** । **अन्यत्रे**त्यनेन भाष्ये **यो**कोभलित्यादौ निषेधाऽभावात्तदन्तविधिरनुज्ञायते । एवं च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तत्र वर्णग्रहणमिति परिहरति—**उच्यत इति** ।

---

† त्यदादीनामः ७ । २ । १०२ ‡ भस्त्रैषाजा० ७ । ३ । ४७

+ स्त्रियाः ६ । ४ । ७९

## प्रत्ययग्रहणं चाऽपञ्चम्याः ॥ २८ ॥

**प्रत्ययग्रहणं चाऽपञ्चम्याः प्रयोजनम् । यञिञोः फग्भवति × । गार्ग्यायणः वात्स्यायनः, परमगार्ग्यायणः परमवात्स्यायनः । अपञ्चम्या इति किमर्थम् ?**

---

**प्र०—प्रत्ययग्रहणं चाऽपञ्चम्या इति ।** 'प्रत्ययग्रहणे यस्मात्स विहित'इति सिद्धे तदन्तविधावपञ्चम्या इति प्रतिषेधार्थं वचनम् । यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्मा भूत्, यथा—**रदाभ्या**मित्यत्र । तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य यस्तकारस्तस्य नत्वं स्यात् । न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ती'ति निषेधावतारः । यत्र हि संज्ञाविधानं तत्रायं निषेधः । इह तु निष्ठानुवादेन नत्वविधिः । संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम् ? उच्यते—यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात्प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत, तस्मात्संज्ञाविधावपि तदन्तविधिनिषेधो 'रदाभ्या'मित्यत्र च । 'अपञ्चम्या'इत्यस्य नायमर्थः—यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति । एवं हि व्याख्यायमाने 'ञितश्च तत्प्रत्यया'दित्यत्र तत्प्रत्ययादेवात्रि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां न तु तदन्तस्येतीति । **परमगार्ग्यायण इति ।** तत्र गार्ग्यायण इत्येवोदाहरणम् । गार्ग्यशब्दाद्यञन्तात्फग्विधानात् । न

---

**उ०—सिद्धे तदन्तविधाविति ।** उक्तवचनेन वाचनिक इत्यर्थः । यत्तु प्रत्ययाक्षिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रसिद्ध एव स इति । **तन्न** । तादृशार्थस्य नियताक्षेपे, आक्षिप्तस्य वा शाब्देऽन्वये मानाऽभावात् । किं च 'वनो र चे'त्यादौ समासप्रत्ययविधावित्यनेनाऽस्यापि निषेधापत्तिर्मम तु सौत्रस्यैव स निषेध इति न दोषः । पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमिति वार्तिकार्थस्तदाह—**यत्रेत्यादि** । **परिगृह्यते**—अनूद्यते । **नत्वं स्यादिति** । दृषत्तीर्णेत्यादौ धातोस्तकारस्य तत्पूर्वपदस्य च तत्स्यादित्यर्थः । **न च संज्ञाविधाविति** । **संज्ञया** विधावित्यर्थ इत्यभिमानः । **यत्रहीति** । संज्ञाया विधौ स निषेधो नतु संज्ञया विधौ । **तर्हीति** । प्रदेशेषु तदन्तग्रहणं यदि तर्हीत्यर्थः । **पुनस्तदन्तेति** । घादिभिरुत्तरपदस्य विशेषणादिति भावः । **तस्मादिति** । 'संज्ञाविधौ प्रत्ययग्रहणे' इति 'प्रत्ययग्रहणे चापञ्चम्या' इति वचनाभ्यामिति भावः । **नायमर्थ इति** । प्रत्यासत्त्या चास्यार्थस्य प्रवृत्तिः । **पञ्चम्यन्तादिति** । पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः । **समासप्रत्ययविधाविति** तु सौत्रस्य निषेध इति न तेनाऽस्य गतार्थतेति भावः । **तत्प्रत्ययादेव**—विकारावयवविहितप्रत्ययादेव । एवञ्चोष्ट्रविकारादौष्ट्रकादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः । भाष्ये—**यञिञोः फगिति** । यद्यपि **ङ्याप्प्रातिपदिका**दित्यधिकारा**दपञ्चम्या** इति निषेधस्तत्र प्राप्नोति तथापि न तद्व्यधिकरणं विशेषणम्, किन्तु यञिञोरिति पञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति अपञ्चम्या इत्यस्याऽविषयोऽयमिति भावः । **तस्मादिति** । 'प्रत्ययग्रहणे यस्मात्स विहित' इति नियमोऽत्रापि तदन्तविधावपेक्ष्य एव । एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय । **अन्यथा** परमगार्ग्यशब्दात् फकि 'पारमगार्ग्यायण' इति स्यादिति न्यायव्युत्पादनार्थमित्यर्थः । नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः ।

---

× यञिञोश्च ४ । १ । १०१

इषत्तीर्णा परिषत्तीर्णा × ।

**अलैवानर्थकेन*** ॥

**अलैवानर्थकेन, नान्येनानर्थकेनेति वक्तव्यम् । किं प्रयोजनम् ? इन्ग्रहणे† प्लीहन्ग्रहणं मा भूत् । उद्ग्रहणे‡ गेर्मुद्ग्रहणम् । स्त्रीग्रहणे+शस्त्रीग्रहणम् ।**

---

प्र०—त्वत्र परमगार्ग्यशब्दात्प्रत्यय, तस्य यञन्तत्वाऽभावात् । तस्माच्च फकि विधीयमाने 'पारमगार्ग्यायण' इत्यनिष्टरूपप्रसङ्गः । तस्मादेतन्न्यायव्युत्पादनार्थं परमगार्ग्यायण इत्युपन्यस्तम् । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः । तत्र 'रदाभ्या'मित्यत्र निष्ठया प्राधान्येनाऽश्रवणात्तदन्तविध्यभावः । 'स्यतासी लृलुटो'रित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधाल्लृलुटोर्वा प्राधान्येनाऽऽश्रयणात्तदन्तविध्यभाव. ।

**अलैवानर्थकेनेति** । अर्थवद्ग्रहणे नानर्थकस्येति वर्णनिर्देशेषु नाश्रीयत इति स्थितम् । वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते तत्र वर्णग्रहणं च सर्वत्रेत्यत्र वर्णग्रहणे जातिग्रहण द्वर्णसमुदायग्रहणेऽप्यनर्थकस्य ग्रहणं प्राप्तमनेन नियमेन निवार्यते । अनैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते नियमविधानसामर्थ्याद्वा । **इन्ग्रहण इति** । तेन प्लीहानाविति दीर्घो

---

उ०—नहीदृशेऽर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसम्भावनाऽपीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति चेन्न । परमगार्ग्यैकदेशगार्ग्यशब्दादेव प्रत्ययः, परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायादित्यदोषात् । विशिष्टैनैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव । निष्कृष्यैकार्थीभाव एव वृत्तौ निमित्तमित्यत्र न मानम् । अत एवाऽनुपसर्जनादिति सूत्रे कुम्भकारीशब्दैकदेशात्कारीशब्दादप्युत्पत्तिः शङ्किता भाष्ये । अस्य कैयटस्याप्यत्रैव तात्पर्यम् । एतन्न्यायेत्यस्यापि 'यस्माद्विहित' इत्यादिन्यायेन समस्तैकदेशात्प्रत्यय इत्येतन्न्यायेत्यर्थः । न चैवं 'सुपि च' 'रोः सुपी'त्यादौ सुबन्ते इत्यर्थापत्तिः, नहि तत्र पञ्चम्यन्तात्परत्वेन प्रत्ययो विशेष्यत इति वाच्यम् । **तस्मिन्निति** परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थिताङ्गादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः । ननु **येन नाप्राप्ति**न्यायेनाऽयं निषेधो वाचनिकतदन्तविधेरेवेति **घरूपे**त्यादौ उत्तरपदस्य विशेष्यतया प्राप्ततदन्तविधिःस्यादेवेत्यत आह—**उत्तरपदेति** । अन्यथा 'हृदयस्य हृल्लेखयद'णित्यत्राऽण्ग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात् । लेख इत्यणन्तमेव तत्र गृह्यते । घञन्तस्य त्वनभिधानात्तत्राऽग्रहणमेवेति भावः । अयमपि निषेधो विशेषणविशेष्यभावव्यत्याससूचक एवेत्याह—**तत्रेति** । **प्राधान्येनेति** । शब्दरूपापेक्षयेत्यर्थः । **धातोरिति** । इदं स्यतासिविशेषणमिति चिन्त्यमिदम् । 'सुपि चे'त्यादावस्मदुक्तरीत्यैवाऽत्रापि समाधानं बोध्यम् ।

नन्वलाऽनर्थकेनेत्ययुक्तम्, अर्थवत्परिभाषाविरोधादत आह—**अर्थवदिति** । **स्थितमिति** । 'स्वं रूपमित्यत्रे'ति शेषः । कुतो हेतोरित्यत आह—**वर्णरूपतया तस्येति** । 'वर्णरूपतया यस्ये'ति पाठे 'नार्थवत्तारूप'मित्यतः प्राक् 'तस्य ही'ति शेषो बोध्यः । **अर्थवत्त्वे**ति । तत्त्वसमानाधिकरणं रूपमित्यर्थः । 'वर्णसमुदायग्रहण प्राप्त'मिति पाठे'ऽनर्थक'त्यादिः । 'तदपि प्राप्त'मिति शेषः । **गुणत्वादिति** । तदन्तविधिनियमशेष-

---

× रदाभ्यां निष्ठातो नः पूर्वस्य च दः ८ । २ । ४२　　* क्वचिन्नास्ति ।

† इन्हन्पूषार्यम्णां शौ ६ । ४ । १२　　‡ उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१

+ स्त्रियाः ६ । ४ । ७९　　१ गर्मुत्—'तृणधान्यविशेषः' इति शब्दकल्पद्रुमः ।

**संङ्ग्रहणे × पायसङ्करोतीति मा भूत् ।**

**किमर्थमिदमुच्यते, न 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चे' त्येव सिद्धम् ? न चेदं तत्रापि तदुत्तरपदम् । तत्र वक्तव्यं भवति ।**

---

प्र०—भवति । **उद्ग्रहण इति** । उदः स्थास्तम्भोरित्यत्र । तेन गर्मुत्स्थास्यतीति पूर्वसवर्णाऽभावः । **शस्त्रीग्रहणमिति** । तेन शस्त्र्याविति 'स्त्रिया' इतीयङ् न भवति । **पायसङ्करोतीति** । तेन पायसंकरोतीति 'संपर्युपेभ्य' इति सुण्न भवति । तत्र हन्ग्रहणे स्त्रीग्रहणे चाऽङ्गस्य विशेष्यत्वात्स्यात्तदन्तविधिः । **उदः स्थेत्यत्र** तोरित्यधिकारात्तवर्गान्तस्योच्छब्देन विशेषणात् स्यात्तदन्तविधिः । प्रतिषेधविज्ञाने तु न भवति, उद एव तवर्गेण विशेष्यत्वात्तोरित्यस्य वा निवृत्तत्वात् । सङ्ग्रहणे पदप्रकरणात्तदन्तविधिः स्यादिति निवार्यते । पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः । पायसं करोतीति करोतेर्भूषणार्थवृत्तिता संभवतीति सुट् स्यात् ।

**किमर्थमिति** । 'अलैवानर्थकेने' त्येतदाक्षिप्यते । अस्य हि नियमस्य प्लीहानावित्यादिप्रयोजनम् । तच्चान्यथा सिध्यति । अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चाऽस्ति । 'एङः पदान्तादती'ति पदाधिकारे संग्रहणम्, वा पदान्तस्येत्यतः पदग्रहणानुवर्तनादुदः स्थास्तम्भोरिति पूर्वसवर्णं पदाधिकारे विधीयते । 'पदाङ्गाधिकारे' **इत्यत्र** च केवल पदाधिकारोऽपि ग्रहीष्यते' उत्तरपदाधिकारोऽपि । ततश्च प्लीहानावित्यादिषु दोषो न भविष्यति । न हि प्लीहानावित्यत्र हनित्यङ्गं, नापि तदुत्तरपदमिति प्रश्नः । **तत्र वक्तव्यमिति** । 'पदाङ्गाधिकार' इत्येतदित्यर्थः । 'अलैवानर्थकेने'ति वचनेनाऽर्थवता तदन्तविधिसद्भावादिति भावः ।

---

उ०—**त्वादित्यर्थः** । वर्णसमुदायेन चेत्तदन्तविधिस्तर्ह्यर्थवतैवेति फलितम् । **अन्येत्वङ्गाधिकारे** तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् । वर्णग्रहणं चेत्यन्वाख्यानवार्तिके **ज्ञापकसिद्ध**जातिग्रहणे न मानम् । एवमलेवेत्यत्रापि । 'एकत्वसङ्ख्या मुख्यत्वा' दित्यपिचिन्त्यम् । जातिपरत्वे तद्गत संख्यायाएव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषाऽनुद्धारादित्याहुः । **दीर्घो भवतीति** । **इन्हन्निति** नियमेनाऽनिवर्त्तितत्वादिति भावः । **अर्थवत्परिभा**षासिद्धार्थानुवादोऽयम् । **संपर्युपेभ्य** इति वृत्तिपाठमनुसृत्येदम् । **तस्योच्छब्देनेति** । '**वा** पदान्तस्ये'त्यतः पदग्रहणमनुवर्त्य तस्योता विशेषणादुदन्तस्य पदस्येत्यर्थ उचितः । नन्वव्यभिचारात्तवर्गेणोदो विशेषणं व्यर्थमत आह—**वानिवृत्तत्वादिति** । पदग्रहणमपि फलाऽभावान्निवृत्तम् । **विशेषणं** चेत्यपि बोध्यम् । **पदप्रकरणात्**—'एङः पदान्तादती'त्यतः । नन्वत्र करोतिर्न भूषणार्थोऽत आह—**भूषणेति** । 'पायसं भूषयती'त्यर्थसंभवादिति भावः ।

**केवलपदाधिकारोऽपीति** । अन्यथाऽसन्देहायोत्तरपदेत्येव वदेदिति भावः । भाष्ये—**नापीति** । समासचरमावयवे तस्य रूढत्वादिति भावः । नन्वेवं तदन्तविध्यभावे **वृत्रहणा**वित्याद्यसिद्धिः । तदन्तविधौ तु प्लीहानावित्यत्र दोषोऽत आह—**अलैवेति** ।

---

१—'संग्रहणे पायसं ग्रहणम्' इति पाठान्तरम् । अयमेव पाठो युक्ततरः प्रतीयते पूर्वभाष्यानुरोधात् ।
× संपर्युपेभ्यः करोतौ भूषणे ६ । १ । १३७ २—पायसङ्ग्रहणमिति पा० ।

किं पुनरत्र ज्यायः ? तदन्तविधिरेव ज्यायान् । इदमपि सिद्धं भवति—परमातिमहान् । एतद्धि नैव तन्नापि तदुत्तरपदम् ।

**[1]अनिनस्मन्ग्रहणान्यर्थवताचानर्थकेन ॥**

अनिनस्मन्ग्रहणानि चार्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । अन्—राज्ञेत्यर्थवता, साम्नेत्यनर्थकेन* । अन् ॥ इन्—दण्डीत्यर्थवता, वाग्मीत्यनर्थकेन[2]† । इन् ॥ अस्—सुपया इत्यर्थवता, सुस्रोता इत्यनर्थकेन‡ । अस् ॥ मन्—सुशर्मा इत्यर्थवता, सुप्रथिमा इत्यनर्थकेन+ । मन् ॥

**यस्मिन्विधिस्तदादावल्ग्रहणे ॥ २६ ॥**

अल्ग्रहणेषु यस्मिन्विधिस्तदादाविति वक्तव्यम् । किं प्रयोजनम् ? 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' [ ६ । ४ । ७७ ] इतीहैव स्यात्—श्रियौ भ्रुवौ । श्रियः भ्रुव इत्यत्र न स्यात् ॥ ७२ ॥

---

**प्र०—तदन्तविधिरेवेति** । प्राथमकल्पिकः सूत्रेणैव तदन्तविधिः । स एव त्वनेनैवानर्थकेनेति नियम्यते । **परमातिमहानिति** । परमश्चासावतिमहानिति समासः । तत्र परमादिर्महच्छब्दो न भवति, नापि महच्छब्दोत्तरपदः अतिमहच्छब्दोत्तरपदत्वादिति 'सान्तमहत' इति दीर्घत्वं न स्यात् । अनेनैव न्यायेनोगिल्लक्षणो नुमागमोऽपि न स्यात् । तदन्तविधिना तु भवति ।

**सुस्रोता इति** । 'अनागमकानां सागमका आदेशा' इत्याश्रयणादत्राऽस आनर्थक्यम् । अर्थवतो ह्यागम इति न्यायाश्रयणे त्वर्थवानेवाऽस्शब्दः ।

**यस्मिन्विधिरिति** । तदन्तविध्यपवादस्तदादिविधिः । अत एव विशेषणेन भवति न्यायेन ॥ ७२ ॥

---

उ०—ननु वार्तिकोक्तोऽपि फलतस्तदन्तविधेरेवेत्यत आह—**प्राथमेति** । सौत्रतदन्तविधिरेव ज्यायान्न तु वार्तिकोक्तोत्तरपदस्येत्यंश इति नियम आवश्यक इति भावः । **परमादिरिति** । परमादिः समास उद्देश्यः, महच्छब्दो न भवतीति विधेयं बोध्यम् ।

भाष्ये—**अन्निति** । 'अल्लोपोऽनः', 'इन्हन्पूषेति' 'अत्वसन्तस्य', 'मन' इत्यादिषु वर्तमानानीत्यर्थः । **अर्थवानेवासिति** । इदं चिन्त्यम् । कृते आगमे तद्विशिष्टस्यैवाऽर्थवत्ताया न्याय्यत्वादन्यत्र भाष्ये स्पष्टमुक्तत्वाच्च ।

**मान्येति** । अत एवेको यणचीत्यादौ न दोषः । 'यस्मिन्विधि'रिति वाचनिकमेव । **यस्मिन्निति** सप्तम्यन्तोपलक्षणम् । सप्तम्यन्तं यत्र विशेषणं तत्रेति यावत् ॥ ७२ ॥

---

१—केषांचिन्मते नेदं वार्तिकम्; भाष्यमेव । केचित्तु 'अनिनस्मन्ग्रहणानि च' इति भाष्यवार्तिकं पठन्ति ।

२—'वाग्ग्मी' इति द्विगकारपाठः क्वचित् ।

* अल्लोपोऽनः ६ । ४ । १३४

† इन्हन्पूषा०; सौ च ६ । ४ । १२; १३

‡ अत्वसन्तस्य चाधातोः ६ । ४ । १४

+ मनः ४ । १ । ११

## वृद्धिर्यस्याचामादिस्तद्वृद्धम् । १ । १ । ७३ ।

वृद्धिग्रहणं किमर्थम् ? 'यस्याऽचामादिस्तद्वृद्ध'मितीयत्युच्यमाने 'दात्ताः' 'राक्षिताः' अत्रापि प्रसज्येत । वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति ।

अथ 'यस्य'ग्रहणं किमर्थम् ? यस्येति व्यपदेशाय ।

अथाऽज्ग्रहणं किमर्थम् ? 'वृद्धिर्यस्यादिस्तद्वृद्ध'मितीयत्युच्यमाने इहैव स्यात्—ऐतिकायनीयाः औपगवीयाः । इह न स्यात्—गार्गीयाः वात्सीया इति । अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति ।

---

प्र०—वृद्धिर्यस्या । वृद्धिग्रहणमिति । असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीति चेत् । यस्याचामादिर्भिन्नजातीयो हल्तद्वृद्धमित्यजादि व्यावर्तितं स्यात् । दात्ता इति । असति वृद्धिग्रहणे निर्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत । 'दत्त'शब्दो 'रक्षित' शब्दश्चात्र क्रियाशब्दो द्रष्टव्यः । नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा । 'प्रस्थेऽवृद्ध'मित्यत्र यदा नामधेयत्वाद्वृद्धाः पक्षे कर्क्यादयस्तदर्थं प्रतिषेधः स्यात् ।

यस्येति व्यपदेशायेति । संज्ञिन इति शेषः । अन्यथा तच्छब्देन किं प्रत्यवमृश्येत । तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसंज्ञाप्रसङ्गः ।

गार्गीया इति । नहि गार्ग्यशब्दस्य वृद्धिरादिः, किं तर्हि हल् । 'मालादीनां चे'त्येतत्तु नामधेयार्थं स्यात् ।

---

उ०—वृद्धिर्यस्या । ननु वृद्धिग्रहणाऽभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्यमेव स्यादिति तन्मात्रात्क्षेपोऽनुपपन्न इति शङ्कते—असतीति । सङ्कोचे प्रमाणाऽभावादच्छब्देन सर्वेष्वज्सु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति—यस्येति । नन्वचामिति निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नाऽतिप्रसक्तिरत आह—असतीति । समीपार्थ इति । पूर्वसमीपार्थ इत्यर्थः । एवं च तन्निरूपितसंबन्धे षष्ठी, न तु निर्धारण इति भावः । यस्याचामादिर्हलित्यर्थः स्यादिति तात्पर्यम् । नामधेयस्य त्विति । 'वा नामधेयस्ये'ति वचनादिति भावः । भाष्ये—अत्रापीति । अण्प्रकृताविस्यर्थः । नन्वेवं हलादेः सर्वस्य वृद्धत्वे प्रस्थेऽवृद्धमिति सूत्रे कर्क्यादिप्रतिषेधोऽनर्थकोऽत आह—प्रस्थ इति ।

तदित्यस्यानुपादान इति । तदित्यस्याप्यनुपादाने इत्यर्थः । वृद्धेरेवेति । तथा च प्रदेशेषु त्यदादि-विषये मुख्यो वृद्धशब्दोऽन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्यप्रसङ्ग इति भावः ।

ननु मालादीनामिति लिङ्गादादिसहचरिता यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह—मालादीति ।

**अथाऽऽदिग्रहणं किमर्थम् ? 'वृद्धिर्यस्याचां तद्वृद्ध' मितीयत्युच्यमाने सभासंनयने भवः साभासंनयनः—इत्यत्रापि[1] प्रसज्येत ? आदिग्रहणे पुनः क्रियमाणे न दोषो भवति ।**

**वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ॥ १ ॥**

**वृद्धसंज्ञायामजसंनिवेशादादिरित्येतन्नोपपद्यते । नह्यचां संनिवेशोऽस्ति । ननु चैवं विज्ञायते—अजेवादिरजादेरिति । नैवं शक्यम् । इहैव प्रसज्येत—**

---

**प्र०—सभासंनयन इति** । सति चेहादिग्रहणे आद्यन्तवत्सूत्र एकग्रहणस्य सभासंनयनशब्दः प्रत्युदाहरणम् । असति त्विहाऽऽदिशब्दे दरिद्रातेरिवर्णान्तलक्षणस्याऽचोऽभाव एकग्रहणस्य प्रयोजनम् । 'अचा'मिति तु बहुत्वं संख्याविवक्षार्थ स्यात् ।

**नह्यचामिति** । सर्वस्य प्रातिपदिकस्याज्झल्समुदायरूपत्वात् । अचामित्यनेन च केवलानामचां समुदायः संनिवेशरूपो निर्दिष्टः । पौर्वापर्येणावस्थानं संनिवेशः । स च केवलानामचां नास्ति ।

**ननु चैवमिति** । अच्संनिवेशस्याऽसंभवादचां मध्येऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः । **नैवं शक्यमिति** । वृद्धिविशेषणार्था निर्धारणे षष्ठी स्यात् । अचा मध्ये

---

**उ०—भाष्ये—अथादीति** । **अचामिति** षष्ठ्युपादानसामर्थ्यादादिशब्दोऽध्याहरिष्यत इति प्रश्नः । यस्यावयविनोऽवयवानामचां मध्ये वृद्धिरप्यवयव इत्यध्याहारं विनैवार्थसंभवेऽध्याहारे मानाऽभाव इत्युत्तराशयः । तत्र प्रसङ्गादादिग्रहणसत्त्वाऽसत्त्वयोराद्यन्तवत्सूत्रस्थैकग्रहणप्रयोजनं दर्शयति—**सतिचेति** । असत्येकग्रहणे पूर्वसहितेऽपि भाशब्दाकारे आदिवत्त्वात्सभासंनयनस्यापि वृद्धत्वं स्यादिति भावः । **अच इति** । एरच इत्यर्थः । तत्र हि धातोरित्यधिकार इति भाव. । घञचोः स्वरे विशेषः । नन्वेवं यस्य वृद्धिरवयव इत्येव सिद्धेऽचामिति व्यर्थमत आह—**अचामितीति** । तथा च रादृशब्दादेर्वृद्धत्वं नेति भावः । कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाऽजपेक्षया नत्वनादित्वं, तस्यैव तेन ग्रहणान्न सभासंनयने दोषः । **अचामिति** बहुत्वमविवक्षितं, तेन मालीयादिसिद्धिः ।

ननु यत्र हलघटिता अच एव संनिविष्टास्तत्राऽस्य प्रवृत्तिरुचिता न तु हलन्तरितेष्वज्ञु इति मन्यमानः शङ्कते भाष्ये—**वृद्धसंज्ञायामिति** । नन्वस्त्येव मातृकापाठे संनिवेशोऽत आह—**सर्वस्येति** । वृद्धत्वप्रयुक्तकार्यभाज इत्यर्थः । वृद्धत्वनिबन्धनकार्यस्य प्रातिपदिके सत्त्वादिति भावः । **अचामित्यनेन केवलानामिति** । सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरिति भावः । अज्मात्रसंबन्धिनो यस्य समुदायस्यादिर्वृद्धिरित्यर्थः स्यादिति तात्पर्यम् ।

ननु प्रथमान्ताऽच्पदाऽभावादजेवादिरित्ययुक्तमत आह—**अजिति** । निर्धारणषष्ठ्याश्रयणान्निर्धारणस्य समानजातीयविषयत्वाच्च तल्लाभ इति भावः । अज्झल्समुदायेऽप्यजपेक्ष एवादिर्गृह्यते इति भाष्याक्षरार्थः । **वृद्धिविशेषणार्थेति** । तस्याः प्रधानत्वादचामिति तस्या एव विशेषणं स्यादित्यर्थः । यदीया-

---

[1] अपिः क्वचिन्न ।

औपगवीयाः । इह न स्यात्—गार्गीया इति ।

एकान्तादित्वं तर्हि विज्ञायते ।

**एकान्तादित्वे च सर्वप्रसङ्गः ॥ २ ॥**

इहापि प्रसज्येत-सभासन्नयने भवः साभासन्नयन इति ।

**सिद्धमजाकृतिनिर्देशात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? अजाकृतिर्निर्दिश्यते ।

---

**प्र०**—अज्रूपा या वृद्धिरित्याकारस्य निवृत्तिप्रसङ्गः । आकारो ह्यनजेव सन् केवलमच्कार्याणि ग्रहणकशास्त्रेण लभते । ततश्चाश्वलायन इत्यत्र न स्यात् । गार्ग्य इत्यत्र चाकारस्यानच्त्वात्समुदायाऽनादित्वाच्च न स्यात् ।

**एकान्तादित्वे चेति** । एकान्ता अवयवा अचः प्रातिपदिकस्य, तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः । सर्वप्रसङ्ग इति । नह्यत्र विशेष उपादीयते-सर्वेषामचामादिर्वृद्धिरिति । ततश्च मध्येऽपि वर्तमान आकारोऽन्याजपेक्षया सर्वेषामचामादिरिति सभासन्नयने संज्ञाप्रसङ्गः । आदिग्रहणं त्वन्त्यनिवृत्यर्थं स्यात्-खट्वेति ।

**सिद्धमिति** । उभयरूपत्वेऽपि प्रातिपदिकस्याजाकृतिरचामिति वचनादाश्रीयते । विद्यमानाऽपि हलाकृतिर्न विवक्ष्यते । तेनायमर्थः-यस्य शब्दस्य सकलाऽजपेक्षया वृद्धिरादिस्तद्वृद्धमिति । *यथा* पङ्क्तौ 'ब्राह्मणानामादिमानये'त्युक्ते सतोऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते ।

---

दिर्वृद्धिरज्मध्यवर्तिनीत्यर्थः । निर्धार्यमाणनिर्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः । तत्र वृद्धेरच्त्वाऽव्यभिचाराद्विशेषणासामर्थ्येन आक्षरसमाम्नायिकाज्रूपलक्षणवृद्धिपरिग्रह इति भावः । **आकारस्य निवृत्तिप्रसङ्ग इति** । वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः । तत्राऽसाधारणं प्रत्युदाहरणमाह—**ततश्चेति** । भाष्योक्तस्य साधारणत्वं ध्वनयन्नाह—**समुदायेति** । यस्येत्याद्यपेक्षया षष्ठीति भावः ।

एवं यस्येत्याद्युपजनितव्यतिरेके षष्ठीमङ्गीकृत्याऽचामिति निर्धारणषष्ठ्यां दोषोऽभिहितः, अनुपजनितव्यतिरेके यस्येति षष्ठ्यामपि तं वक्तुं भाष्ये—**एकान्तादित्वमित्युक्तम्** । तद्व्याचष्टे—**एकान्ता इति** । यस्य प्रातिपदिकस्येति संबन्धः । एवं च यत्प्रातिपदिकावयवभूताऽचामादिर्वृद्धिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः । नन्वादिशब्दोपादानादेव सर्वेषामचामिति लप्स्यतेऽत आह—**आदिग्रहणमिति** ।

**उभयरूपत्वेऽपीति** । **अज्झल्रूपत्वेऽपीत्यर्थः** । **यस्येति** नाचां विशेषणम्, तेषामन्यविशेषणत्वात् । नाप्यादेः, व्यवहितत्वात् । किंतु वृद्धेः । अचामिति चादेर्विशेषणं, संनिधानात् । न वृद्धेः, व्यवहितत्वात् । एवं च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याऽजपेक्षादित्वस्योपपत्तये मध्ये वर्तमानापि हलाकृतिर्न विवक्ष्यत इति भावः । **सकलाजिति** । सङ्कोचे मानाऽभावादिति भावः । **सतोऽपीति** । आदौ मध्ये वेति शेषः ।

**एवमपि व्यञ्जनैर्व्यवहितत्वान्न प्राप्नोति ।**

**व्यञ्जनस्याऽविद्यमानत्वं यथान्यत्र ॥ ४ ॥**

**व्यञ्जनस्याऽविद्यमानवद्भावो वक्तव्यः । यथाऽन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति । क्वान्यत्र ? स्वरे ।**

**वा नामधेयस्य ॥ ५ ॥**

**वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । देवदत्तीयाः†, दैवदत्ताः । यज्ञदत्तीयाः, याज्ञदत्ताः ।**

**गोत्रोत्तरपदस्य च ॥ ६ ॥**

**गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या । कम्बलचारायणीयाः, ओदनपाणिनीयाः, घृतरौढीयाः ।**

---

प्र०—**व्यञ्जनस्येति** । **अचामिति** । वचनाद्विद्यमानान्यपि व्यञ्जनानि न विवक्षितानीत्यर्थः । **यथाऽन्यत्रेति** । यथा स्वरविधावयोग्यत्वाद्व्यञ्जनमविद्यमानवदेवमिहाप्यचामिति वचनादित्यर्थः । 'ह्रस्वनुड्भ्या'मिति स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जन व्यवधायकमेवेत्युदश्वित्वानिति मतुप उदात्तत्वं न प्रवर्तते ।

**वा नामधेयस्येति** । पौरुषेय नाम गृह्यते ।

**कम्बलचारायणीया इति** । कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः । **ओदनपाणिनीया इति** । पणिनोऽपत्यमित्यण् । 'गाथिविदथी'ति प्रकृतिभावाट्टिलोपाऽभाव । पाणिनस्यपत्यं युवेतीञ्, तस्य च्छात्रा इति विवक्षिते यूनि लुगितीञो लुक्, तेन इञश्चेत्यणन भवतीति च्छो भवति ।

---

उ०—**अचामितीति** । केवलाऽच्संनिवेशाऽसंभवादिति भावः । **स्वरविधाविति** । स्वरे विधेय इत्यर्थः । **अयोग्यत्वादिति** । स्वराणामज्धर्मत्वादिति भावः । अत एव 'यतोऽनाव' इति 'अनाव' इति प्रतिषेधः सार्थकः । **नुड्ग्रहणादिति** हल्स्वरप्राप्तिविषयकमेवाऽनाव इति ज्ञापकमिति भावः । अन्यथा नुटोऽविद्यमानवत्वादल्लक्षणानित्यादौ ह्रस्वादित्येव मतुप उदात्तत्वं सिद्धिमिति तद्वैयर्थ्यं स्यादिति तात्पर्यम् ।

**पौरुषेयमिति** । आधुनिकमित्यर्थः । **गृह्यते इति** । अत्र वार्त्तिके इत्यादिः । अत्र एवेङ्प्राचां देशे इति चरितार्थम्, रूढमात्रस्य नामत्वेन ग्रहणे तद्वैयर्थ्यं स्पष्टमेव । घटीय इति तु गहादित्वात्साधु । 'घाट' इति त्वसाधु । अत एव भाष्ये देवदत्तशब्द उदाहृत इति भावः ।

**युवेतीञिति** । प्रकृते च गोत्रशब्देनाऽपत्यमात्रम्, अपत्याधिकारादन्यत्वादिति भावः । नन्वोदनपाणिनीया इत्यत्र वृद्धत्वे च्छोऽसमस्तवदतिदेशे इञन्तत्वादिञश्चेत्यणिति भेदः स्यादत आह— **तेनेञश्चेति** । येन यूनि विहितो न गोत्रे तेनेत्यर्थः । **इञश्चे**त्यत्र गोत्र इति वर्तते । पारिभाषिकं च तत्र गोत्रं गृह्यते इति भावः । यत्तु तेन लुकेति । तन्न । प्रत्ययलक्षणस्य दुर्वारत्वात् ।

---

† वृद्धाच्छः ४ । २ । ११४

**गोत्रान्ताद्वाऽसमस्तवत् ॥ ७ ॥**

गोत्रान्ताद्वाऽसमस्तवत्प्रत्ययो भवतीति वक्तव्यम् । एतान्येवोदाहरणानि ।
किमविशेषेण ? नेत्याह ।

**जिह्वाकात्यहरितकात्यवर्जम् ॥ ८ ॥**

जिह्वाकात्यं हरितकात्यं च वर्जयित्वा । जैह्वाकाताः, हारितकाताः ।

किं पुनरत्र ज्यायः ? 'गोत्रान्ताद्वाऽसमस्तव' दित्येव ज्यायः । इदमपि सिद्धं भवति-पिङ्गलकाण्वस्यच्छात्राः पैङ्गलकाण्वाः‡ ॥ ७३ ॥

## त्यदादीनि च ॥ १ । १ । ७४ ॥

यस्याचामादिग्रहणमनुवर्तते, उताहो न ? किं चातः ? यद्यनुवर्तते, इह च प्रसज्येत-त्वत्पुत्रस्य च्छात्रास्त्वात्पुत्राः मात्पुत्राः । इह च न स्यात्—त्वदीयः मदीय इति । अथ निवृत्तम्, 'एङ् प्राचां देशे' [ १ । १ । ७५ ] यस्याचामादिग्रहणं कर्तव्यम् ।

प्र०—**पैङ्गलकाण्वा इति । कण्वादिभ्यो गोत्र** इत्यण् । वृद्धसंज्ञाया तु छः स्यात् ॥७३॥

**त्यदादीनि च । त्वात्पुत्रा इति ।** आदिग्रहणानुवृत्त्यन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादिति भाव । अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात् । तत्संबन्धस्येहाऽयोग्यत्वात् । निर्धारणस्य समानजातीयविषयत्वात् । **त्वदीय इति ।** व्यपदेशिवद्भावोऽत्र नास्ति, अप्रातिपदिकेनेति निषेधात् ।

उ०—भाष्ये—**गोत्रान्ताद्वेति ।** गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः । चारायणो गोत्रान्तो यथाऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाऽभावेपीत्यर्थः । वेत्यनेन **वृद्धसंज्ञा** वा **कर्तव्या** इदमुपसंख्यानं वेत्युक्तं भवति ।

भाष्ये—जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेऽपि द्रष्टव्यम् ।

**अणिति** । स च केवलेभ्यः **काण्व्यादिभ्यश्छ**स्यापवाद । वृद्धसंज्ञापक्षे तु समुदायस्य **कण्वादिषु** पाठाऽभावात् प्रत्ययविधौ तदन्तविधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥ ७३ ॥

**त्यदादीनि च** । भाष्ये—**अनुवर्तत इति** । पूर्वसूत्रात्परतो गच्छति नवेति विचारः ।

ननूपसर्जनाना गणाद्बहिर्भावेन **कथं** त्यदादित्वमत आह—**आदीति** । सामर्थ्याद्भूतपूर्वगतिराश्रयिष्यत इति भावः । **अचामित्यस्य त्विति** । इहादिग्रहणासम्बन्ध एव भाष्यतात्पर्यमिति भावः । व्यपदेशिवद्भावेन केवलेपि सिद्धमिति **इह च नेति** भाष्यमयुक्तमत **आह—व्यपदेशिवदिति** । स निषेधः **प्रत्ययविधौ** तन्मात्रोपयोगिसंज्ञाविधौ चेति भावः । तदनाश्रित्यैवेदम् ।

‡ कण्वादिभ्यो गोत्रे ४ । २ । १११

एवं तर्ह्यनुवर्त्तते। कथं त्यात्पुत्रा मात्पुत्रा इति ? सम्बन्धमनुवर्तिष्यते—'वृद्धिर्यस्याचामादिस्तद्वृद्धम्'। 'त्यदादीनि च'। वृद्धसंज्ञानि भवन्ति। 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्'। 'एङ् प्राचां देशे'। यस्याचामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम्। तद्यथा—कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते। स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति ॥ ७४ ॥

## एङ् प्राचां देशे ॥ १ । १ । ७५ ॥

### एङ् प्राचां देशे शैषिकेषु ॥

एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम्। सैपुरिकी सैपुरिका। स्कौनगरिकी

प्र०—**संबन्धमिति**। द्वितीयान्तमेतत्। संबन्धमनुरोत्स्यते न हास्यतीत्यर्थः। अथवा सबध्यत इति संबन्धम्। कर्मणि घञ्नपुंसकेऽपि बाधकाऽभावाद्भवति। वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादिभिः सबन्धः। **तद्यथेति**। एतद्दर्शयति—स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरिति सबध्यते। एङ् यस्याचामादिस्तद्वृद्धमिति वाक्यार्थसंपादनाय। इह त्वयोग्यत्वात्संबन्धानुपपत्तिः, तुल्यजातीयस्य निर्धारणात्। त्यदादीनां चाज्रूपत्वाऽभावाद्यस्याचामादयस्त्यदादय इति तत्संबन्धाऽभावात् ॥ ७४ ॥

**एङ् प्राचाम्**। कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम्। तेन क्रोडो नामोदग्ग्रामस्तत्र भवः क्रौड इत्यणेव भवति। अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम्। तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वे ढञ्ञिठौ

उ०—**ननु नपुंसके भावे क्तल्युटौ घञपवादौ**। स्त्र्यधिकारात्परतो वासरूपविधिश्च नेति सम्बन्धमिति नपुंसकप्रथमैकवचनमनुपपन्नमत आह—**द्वितीयान्तमिति**। **नपुंसकेपीति**। 'घञपः पुंसी'ति भावघञ्विषयकं काचित्कं वेति भावः। चेतनावनस्यागोपादाने सभवतः, यस्यादिरित्यस्य तु कथं न स्यातामत आह—**एतदिति**। **योग्यत्वादादिरित्यर्थ**इत्येकवचनान्तेन सम्बन्ध इति शेषः। **तुल्यजातीयस्येत्युपलक्षणम्**। त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ ७४ ॥

**एङ्प्राचाम्**। **कुणिनेति**। विधेयसंबन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थम्। अन्यथा प्राग्देश इत्येव वदेदिति भावः। लक्ष्याऽवैषम्याय च व्यवस्थितविभाषाश्रयणम्। तत्फलमाह—**तेनेति**। **अन्येस्त्विति**। श्रुतान्वये संभवत्यन्येनाऽन्वयोऽनुचित इति तद्भावः। **वाहीकश्च** देशविशेषः। तत्र स ग्रामः प्राग्देशबहिर्भूतः। वाहीकदेशश्चोभयसंबद्धः प्राग्देशबहिर्भूतो वा। अत एवा**ऽव्ययात्त्यबिति सूत्रे** शाकल नाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता। एतेनोभयबहिर्भूता वाहीका इत्यपास्तम्। **वाहीकग्रामाविति**। आद्ये अस्याऽप्राग्देशीयाविति शेषः पूरणीय इति बोध्यम्। अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत। **ठञ्ञिठाविति**। वाहीकग्रामेभ्यश्चेत्यत्र **वृद्धादित्यनुवृत्तेः**। प्रागुद्भिभागस्तु '**शराव**-

१—**सार्थः**—'वणिक्समूहः' इति शब्दकल्पद्रुमः। समूहमात्रमिति मेदिनी। इह तु रक्षकपुरुषसमूहग्रहणमुचितम्। एवं १४४ पृष्ठस्थविमर्शटिप्पण्यामपि ज्ञेयम्।

२—'निष्क्रान्तारीभूतो' इति पाठान्तरम्। ३—इदं क्वचिन्न।

